॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

## विषयसूचना

# सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशास्त्राध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज़् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य 'वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलाससुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

**एच्. योगनरसिंहार्यः, एम्.ए.,**

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

१. रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना.
२. जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रासु.
३. प्रबुद्धकर्णाटक, बेंगळूरु.
४. मिथिक् सोसैटि जर्नल्, बेङ्गळूरु.
५. यूनिवर्सिटि यूनियन् म्यगसीन्, मैसूरु.
६. सद्बोधचन्द्रिके, आनन्दवन.
७. काद्म्बरीसंग्रह, चामराजनगर.
८. उद्यानपत्रिका, तिरुवादि.
९. सुप्रभातम्, काशी.
१०. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
११. आन्ध्रसाहित्य परिषदः पत्रिका, काकिनाड.
१२. विश्वकर्णाटक, बेङ्गळूरु.
१३. ताय्नाडु, बेङ्गळूरु.
१४. सूर्योदयः, काशी.
१५. उद्योतः, लाहोर्.
१६. स्वधर्मप्रकाशिनी, मद्रासु.
१७. जयकर्नाटक, धारवाड.
१८. दि आर्यन्पात्, मुम्बै.
१९. वैखानसपत्रिका, चेङ्गल्पद्.
२०. दि फिलसाफिकल् क्वार्टर्लि, कल्कत्ता.
२१. रेव्यू आफ् फिलासफी एण्ड् रिलिजन्, पूना.
२२. कर्नाटिक हिस्टारिकल् रिसर्च्, धारवाड.
२३. भारती, मद्रास्.
२४. अध्यात्मप्रकाशः, बेङ्गळूरु.
२५. ला कालेज् म्यागजीन् मद्रासु.
२६. सुबोध, बेङ्गळूरु.
२७. Wiener Beitrage Zur Kulturgeschichte and Linguistik, Wien.

२८ The Literary and Educational Supplement to the "The Hindu," Madras.

२९. The School Folk, Tumkur.

३०. Saqi, Secunderabad.

३१ ಜ್ಯೋತಿಷವಿಚಾರಸಾಗರ, ಶಿವಮೊಗ್ಗ.

३२. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः"

(ईशोपनिषत्)

सम्पुटम् ९]   जनवरि एप्रिल् च १९३३   [सञ्चिका १-२

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥

# अङ्गत्वनिरुक्तिः

(अनुवृत्ता)

---

तत्र लैंगिकत्वे इष्टापत्त्यैवानाशंक्या । न च तत्र प्रयाजशेषीय-प्रतिपत्त्याकांक्षयैव प्रतिपत्तिविधेः कल्पना तस्यालिंगकल्प्यत्वाभावेन लैङ्गिकाङ्गत्वाभावः । अभिघारण निष्ठयोग्यताया विधिकल्पनाया-माकांक्षाया स्सहकारित्वेन लिङ्गस्यैव तत्रा भिघारणनिष्ठ प्रयाज-शेषङ्गतायां प्रमाणत्वात् । तत्राकांक्षायाः प्रमाणत्वे अङ्गत्वप्रमाण-विभागव्याकोपात् पाके समर्थस्यापि देवदत्तस्य पाकाकांक्षाभावे पाके विनियोगादर्शनेन आकांक्षां विना लिङ्गस्य क्वाऽप्यविनियोजक-त्वात् सर्वत्राकांक्षाया एवाङ्गत्वप्रमाणत्वापत्तौ लिङ्गप्रामाण्यानापत्तेश्च । अथ श्रुतविधिनाप्रायाजशेषकरणकाभिघारणस्य हविरुद्देशेन विधावभि-घारणे प्रयोजशेषस्य विनियुक्तत्वेन प्रतिपत्त्याकांक्षाया अभावादार्थिक-विधिकल्पनानुपपत्तिः । न च यथो त्तरार्धात्स्विष्टकृते समवद्यती-त्यत्रोत्तरार्धस्यापादानतया गुणत्वेन विनियुक्तस्याऽप्यार्थिकविधिकल्पनया प्रतिपाद्यत्वं तथेहापीतिवाच्यम् । तत्रत्यागांशंप्रतिविनियुक्तस्याऽप्युत्तरा-र्धस्य प्रक्षेपांशायप्रयोजकांक्षया आर्थिकविधिकल्पनया प्रक्षेपांशं प्रति प्रतिपाद्यत्वोपपत्तावपि प्रकृत अंशभेदाभावेन तदनुपपत्तेः । एतेन मैत्रा-वरुणाय दण्डं प्रयच्छतीत्यत्र दण्डकरणकदानस्य मैत्रावरुणोद्देशेन विधिरितिसिद्धान्ते दीक्षितदण्डस्य दीक्षाभिव्यञ्जकालम्बनयुक्तस्य दाने विनियोगासम्भवात् श्रुतविधेर्दण्डान्तरप्रयोजकशक्तिकल्पनागौरवपरिहारा-यार्थिकदानप्रतिपत्तिकल्पनया दण्डस्य दानप्रतिपाद्यत्वम् । प्रतिपत्तेश्च कार्यसङ्कोचकत्वस्य कृष्णविषाणास्थले क्लृप्तत्वात्कार्यसङ्कोचेन दीक्षित-

दण्डाविषयत्वासिद्धिरिति नव्यैरुक्तम् । नथेहाभिधारणे विनियुक्तस्य श्रुतविधेर्धारणाक्षेपशक्तिकल्पनागौरवपरिहारायोत्थाप्यप्रतिपत्त्याकांक्षया आर्थिकप्रतिपत्तिविधिं कल्पयित्वा प्रतिपाद्यत्ववस्तु । दोषोनानुमितिह्यसाविति न्यायेनार्थिकेप्रतिपत्तिविधौ धारणप्रयोजकत्वशक्तिकल्पनस्यादोषत्वादिति निरस्तम् । तत्र समर्पणमात्रेणैव मैत्रावरुणोपकारसिद्धेस्त्यागांशेन दण्डप्रतिपत्त्यर्थताया नव्यैरुक्तत्वात्प्रकृते तद्रीतेरसम्भवात् । किञ्च प्रयाजशेषविशिष्टाभिधारणविधौ विशेषणविधेरावश्यकत्वात्तस्यैव धारणाक्षेपशक्तिमत्वकल्पनोपपत्तौ नाश्रुतविधौ तत्कल्पनप्रयुक्तगौरवावकाशः । मैत्रावरुणायेत्यत्र तु नविशेषणविधिकल्पनं लघीय इति वैषम्यम् । तैत्तरीयशाखाय यद्दीक्षितदण्डं प्रयच्छतीति प्रतिपत्तिविधिः श्रुतत्वेन तत्र तदकल्पनाच्चेतिचेन्न । श्रुतविधौ प्रयाजशेषकरणत्वस्य भावनायामन्वये प्रायाजार्थताबोधस्योत्तरकालीन विशेषणविध्यधीनत्वात् ततः पूर्वं प्रयाजशेषीयप्रतिपत्त्याकांक्षया अनिवृत्तेर्विशेषणविधेरिव प्रतिपत्तिविधेरपि प्रतिपत्त्याकांक्षासहकृतलिङ्गरूपसामग्रीसत्वेन कल्पनोपपत्तेः । नचैवं विशेषणविधेरपि कल्प्यत्वाविशेषेण विनिगमनाविरहाद्धारणाक्षेपशक्तिकल्पनापत्तेः दैक्षे हृदयाद्यभिधारणार्थं वाजपेये प्राजापत्यवपाभिधारणार्थं शेषस्य धारणीयत्वापत्तिः । तथाच प्रतिपत्तेरेव धारणप्रयोजकत्वोपगमेन सान्निहितहविष्षुच शेषसमापनोक्तिश्चतुर्थोक्ता विरुध्येतेति वाच्यम् । कालान्तरीयहविरभिधारणार्थं पात्रान्तरोत्पादनगौरवस्यैव विनिगमकत्वेन प्रतिपत्तिविधेरेव धारणाक्षेपशक्तिकल्पनेनाविरोध इत्याशयेन नव्यवत् भव्यता सम्भवात् । इदं च लिङ्गं द्विविधं । सामान्यसम्बन्धबोधकप्रमाणसापेक्षं तदनपेक्षं चेति । स्वप्रमेयाद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्ननिरूपितस्वमेयाङ्गतन्निष्ठसम्बन्धबोधकप्रमाणसापेक्षत्वं समान्यसम्बन्धबोधकप्रमाणसापेक्षत्वम् । अस्तिचेदं बर्हिर्देवसदनंदामीत्यादि मन्त्रलिङ्गे । अत्र मन्त्र-

लिङ्गकल्प्यश्रुतौ न लवनत्वेन लवनस्योद्देश्यता। विनापि मन्त्रं प्रकारान्तरेण स्मृत्वा लवनसम्भवेनानर्थक्यात्। अपित्वपूर्वीयलवनत्वेन। न तेन रूपेण मन्त्राद्बोधस्सम्भवति। तस्य लवनत्वमात्रेण बोधकत्वात्। न चा पूर्वीयलवनत्वेन बोधंविना अनेन मन्त्रेणा पूर्वीयलवनं प्रकाशये द्विति निरुक्तोद्देश्यतावच्छेदकावच्छिन्न वाचक पदघटित श्रुतिकल्पनं सम्भवति। अतोऽपूर्वीय लवनत्वेन बोधार्थं प्रकरणरूप प्रमाणान्तरमपेक्षणीयम्। तत्र दर्शपूर्णमासप्रकरणे मन्त्रस्य पाठाद्दर्शपूर्णमासापूर्वसम्बन्धिकिञ्चिदनेन मन्त्रेण प्रकाशयेदित्यवगते किन्तदित्यपेक्षयां लवनमिति मन्त्र लिङ्गतोऽवगम्यते। अतो मन्त्रलिङ्गप्रमेय दर्शपूर्णमासापूर्वसम्बन्धिलवनत्व व्यापक दर्शपूर्णमासापूर्वसम्बन्धित्वावच्छिन्न निरूपित मन्त्र निष्ठ सम्बन्धबोधक प्रमाणसापेक्षत्वादस्य लिङ्गस्य सामान्यसम्बन्धबोधक प्रमाणसापेक्षत्वम्। एवं पूषानुमन्त्रणमन्त्रे यागानुमन्त्रणमिति समाख्यया यागसामान्या पूर्वसाधनरूपोद्देश्य सम्बन्धिकिञ्चिदनेन मन्त्रेण प्रकाशयेदित्यवगते किन्तदित्यपेक्षायां पूषेति मन्त्रलिङ्गादवगम्यते। अतोलिङ्गप्रमेयपूषनिष्ठविजातीययागापूर्व साधनत्व रूपोद्देश्यतावच्छेदक व्यापक यागसामान्या पूर्व साधनत्वावच्छिन्ननिरूपित मन्त्रनिष्ठसम्बन्धबोधक समाख्यासापेक्षत्वाल्लिङ्गस्य निरुक्त प्रमाण सापेक्षत्वं। यत्र तूद्देश्यस्वरूपे अनर्थक्याभावेनापूर्वसाधनत्वादिबोधार्थं न प्रकरणाद्यपेक्षा यथाऽर्थज्ञानसामर्थ्यात्कर्मानुष्ठानाङ्गत्वे। तत्र लिङ्गस्य सामान्य सम्बन्धबोधक प्रमाणानपेक्षत्वत्। लिङ्गस्यचाशाब्दत्वेनाविधायकत्वा द्विहितत्वघटितनिरुक्ताङ्गत्वे साक्षात्प्रमाणत्वासम्भवेन विधायक श्रुतिकल्पनान्तरित प्रामाण्यस्यानन्तरित प्रामाण्य श्रुतितो दौर्बल्यम्। अत एव कदाचन स्तरीरसीति इन्द्रप्रकाशिकाया ऋचो यावल्लिङ्गादिन्द्रोपस्थानार्थत्वं कल्प्यते ताव दैन्द्रया गार्हपत्यमुपतिष्ठत इति श्रुत्या गार्हपत्योपस्थानार्थत्वमैन्द्र्यधिकरणे

निरूपितम् । नचोपक्रमस्थ तद्धित श्रुत्येन्द्राङ्गत्वावगमान्न गार्हपत्योप-स्थानाङ्गत्वमिति वाच्यम् । लाघवात्त्यज्यमानद्रव्योद्देश्यत्वसमनियताखण्डोपाधिरूपदेवतात्वशक्तस्य तद्धितस्य प्राधान्येन प्रतिपाद्यत्वरूपसखण्डोपाधिरूपदेवतात्वे लक्षणाङ्गीकारेण प्रकृततद्धितस्य श्रुतित्वाभावात् इन्द्रोद्देशेनविधावेकप्रसरताभङ्गापत्तेश्च । चयनप्रकरणपठितैन्द्र्येति वचनेन चयनानुपयोगीन्द्रप्रकाशकत्वेन विधानानुपपत्तेश्च । गार्हपत्यस्यतु साधनत्वेन चयनासंबन्धित्वेऽपि चयनसंस्कार्यत्वोपपत्तिः । अतः शक्त्या इन्द्रप्रकाशकत्वमादायैन्द्र्येति संज्ञामुपपाद्य गौणसामर्थ्यसहकृत तृतीया श्रुत्या गार्हपत्यप्रकाशकत्वमेवास्या ऋच इति ध्येयम् मुख्यसामर्थ्यरूपलिङ्गविरोधि गौणसामर्थ्यस्य श्रुतिसहायत्वेऽपि न स्वतोविनियोजकत्वं । अत एव दर्शपूर्णमास प्रकरणपठितस्य बर्हिर्देवसदनं दामीति मन्त्रस्य शक्त्याबर्हिर्लवनाङ्गत्वं न तु गौण्या उलपराजिलवनाङ्गत्वमित्युक्तं तृतीये॥

इति लिङ्गनिरूपणम्.

---

## अथ वाक्यं निरूप्यते.

पदसमभिव्याहारो वाक्यम् । यथा धेनुर्दक्षिणा उच्चैर् ऋचा क्रियते इत्यादौ । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादि श्रुतिस्थले पदसमभिव्याहाररूपवाक्यसत्वेऽपि प्रधान्येनव्यपदेशाभवन्तीति न्यायेन श्रौताङ्गत्वस्यैव व्यवहारः । नतु वाक्यीयाङ्गस्येति प्राञ्च । नव्यास्तु अङ्गत्वघटकीभूत परोद्देश्यताकृतिकारकत्वान्यतर पदार्थाकल्पनानुकूलः श्रुतपदसन्निधिः वाक्यम् । कल्पनशब्देनच सांसर्गिकविषयताशालिशाब्दबोधलक्षणाजन्यशाब्दबोधान्यतरद्विवक्षितम् अतः संसर्गविधया भासमानकरणताकस्य धेनुदक्षिणा उच्चैर् ऋचा क्रियते इत्यादेः लक्षणया भासमान

कर्मत्वस्य प्रयाजशेषेण हवींष्यभिघारयति सक्तून्जुहोतीत्यादेश्च संग्रहः । श्रुतिघटितपदसन्निधेः अङ्गत्वघटकीभूत परोद्देश्यता कृतिकारकत्वान्यतरनिरूपित सांसर्गिकविषयताशालि शाब्दबोधलक्षणाजन्यशाब्दबोधान्यतररूप निरुक्तकल्पनानुकूलत्वाभावान्नातिव्याप्तिरित्याहुः । पूर्ववदङ्गत्वैकदेशबोधप्रयोजकत्वेनाङ्गत्वप्रमाणत्वसूचनायाङ्गत्वघबकी भूतेति । नत्वङ्गत्वघटकत्वस्य लक्षणे निवेशः । प्रयोजनाभावात् । परोद्देश्यताकृतिकारकत्वपदेनच कर्तृत्वकर्मत्व करणत्वसम्प्रदानत्वा पादानत्वाधिकरणत्वान्यतयत्वं विवक्षितम् । संसर्गमर्यादया भासमानकरणताके लिङ्गकल्पित वाक्येऽतिव्याप्तिवारणाय श्रुतेति । कर्तृत्वाद्यन्यतमशक्तिज्ञानाजन्य कर्तृत्वाद्यन्यतमशाब्दबोधप्रयोजक पदसमभिव्याहारो वाक्यमिति तु ज्यायः । नीलोघट इत्यादि समभिव्याहारवारणाय प्रयोजकान्तम् । श्रुतिस्थलीय पदसमभिव्याहारवारणाय जन्यान्तं शाब्दबोधविशेषणम् । धेनुर्दक्षिणेत्यादि पद समभिव्याहार प्रयोज्यशाब्दबोधस्य धेन्वादिशक्तिज्ञानाजन्यत्वात् ततः प्रथमकर्तृत्वाद्यन्यतमेति । नीलोघट इत्यादिपदसमभिव्याहारवारणाय द्वितीयकर्तृत्वाद्यन्यतमेति । निरुक्तशाब्दबोधप्रयोजकत्वं निरुक्ताशाब्दबोधानुकूलाकांक्षायोग्यतादिमत्वम् । तेन करणत्वादावगृहीत तृतीयादिशक्तिकस्य विपरीतव्युत्पन्नस्य व्रीहिभिर्यजेतेत्यादि श्रुतिस्थलीय पदसमभिव्याहारात् कर्तृत्वाद्यन्यतमसांसर्गिक व्रीह्यादिप्रकारक यागादि विशेष्यक शाब्दबोधेऽपि नातिव्याप्तिरितिध्येयम् । नन्वेवमौदुम्बरौयूपो भवतीत्यादौ वाक्योदाहरणत्वापत्तौ औदुम्बरतायाः वाक्यीययूपाङ्गत्वमुपेक्ष्य पशूनाप्नोतीति द्वितीयादि श्रुतिप्रमाणकपश्वङ्गत्वस्यैवोचितत्वात् औदुम्बराधिकरण साधितयूपाङ्गत्वविरोधः । अत एव सन्निध्यनुग्रहादपि न वाक्यीययूपाङ्गत्वाङ्गीकार इति चेन्न । यूपकर्तृकभवनाक्षिप्तायाम्भावनायां यूपेतरस्य कर्मत्वेनान्वेतुमयो-

ग्यत्वात् । आश्रयालाभेन च श्रौतपश्वङ्गत्वायोगात् तत्र वाक्यीययूपाङ्गत्वस्वीकारात् । न च सोमापौष्णं त्रैतमालभेत पशुकाम इति प्रकृतस्य त्रिवर्षपशुद्रव्यसाध्ययागस्यौदुम्बराश्रयत्वं सम्भवति । न च स्वसाधनद्रव्यपरिच्छेदद्वारकाश्रयत्वाऽसम्भवेऽपि अतिदेशप्राप्तपशुनियोजनाङ्गयूपपरिच्छेदद्वारकाऽत्वसम्भवः । यूपस्येव जुह्वादीनां अतिदेशप्राप्तत्वेन तत्परिच्छेदस्याऽपि द्वारतापत्तौ यूपानुवादानुपपत्तेः । अत एवातिदेशिकपशुनियोजनं यूपद्वारा आश्रय इत्यपि न । अथ यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या इत्यत्रावदानानुवादेन पञ्चत्वविधिमङ्गीकृत्य हृदयाद्यवनानऽपि पञ्चत्वसिद्धिः सिद्धान्तिता दशमे वपापदमवयुत्यानुवादः उपलक्षणं वा सत्सर्वानुवादः । तथात्रापि यूपपदमवयुत्यानुवादः उपलक्षणं वा स्यादिति चेन्न । तत्र हृदयादिषु पञ्चावदानाभाव चतुरवदानघटकद्व्यवदानस्यातिदेशादेव प्राप्तेः एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यतात्यस्य वैय्यर्थ्यापत्त्या वपापदस्य निरुक्तानुवादस्वीकारः । तदाद्यवदत्तमात्रोद्देशेन पञ्चत्वविधौ हृदयाद्यवदानेष्वपि पञ्चत्वप्राप्तेः हविषस्त्र्यवदानप्राप्तौ द्व्यावधानविधिस्तद्व्यावर्तकत्वेन सार्थकः न च हृदयादिष्वपि जामदग्न्यादीनां पञ्चावदानस्यातिदेशादेव प्राप्तेस्तेषां हविषस्त्र्यवदानप्राप्तौ द्व्यवदानविधिस्सार्थक इति नव्योक्तं युक्तमिति वाच्यम् । तथापि विधः पाक्षिकफलत्वमुपेक्ष्य वपापदस्यैकस्यैव पाक्षिकानुवादत्वौचित्यात् । प्रकृते तु न कस्याऽपि वैय्यर्थ्यादिकमिति किमिति यूपपदस्य पाक्षिकानुवादत्वाङ्गीकारः । इदञ्च प्राचीनाभ्युपेतवाक्यार्थानुसारेणोक्तम् । वस्तुतस्तु अवदानोद्देशेन पञ्चत्वविधौ हृदयादिवाक्यैः हृदयाद्येकादशेतराङ्गेष्ववदानस्य परिसङ्ख्यातत्वात् । वपायामवदानस्यैव अभावे पञ्चत्वप्रसक्त्यभावात् वपानुवादानुपपत्तेः एकप्रसरताभङ्गापत्तेश्च नायं वाक्यार्थः समञ्जसः । किन्तु पञ्चत्वविशिष्टं

वदनातरस्य अतिदेशतः पूर्वप्रवृत्त्या पञ्चत्वविशिष्टप्राकृतावादानस्यवा वपोद्देशेनविधिः तस्यैव चोपस्थितत्वात् । हृदयादिवाक्ये हृदयाद्युद्देशेन-विधिरिति हृदयादिषु तदङ्गपञ्चत्वप्राप्त्युत्पत्तिरिति नव्यमताश्रयणेन वपा-पदस्य अवयुत्त्यानुवादत्वादिप्रसक्तिः । परन्तु नव्यमते अवदान विधि-समकालप्रवृत्तानां हृदयाद्यवदानविधीनां तदुत्तरप्रवृत्तौ व्यवदानविधि-पाक्षिकफलकत्वापत्त्यतिरिक्तप्रबलप्रमाणं न पश्यामः । किञ्च पञ्चत्व-विशिष्टावदानातरस्य वपोद्देशनविधौ अवदानोद्देशेन पञ्चत्वविशेषणविधि-कल्पनयां अवदानस्वरूपे आनर्थक्यप्राप्तौ वपाभ्यासापूर्वसाधनत्वलक्ष-णाया आवश्यकत्वात् हृदयाद्यवदानेषु कथं पञ्चत्वप्राप्तिः । नह्यभ्यास-विशेषधर्मस्य अभ्यासान्तरे प्राप्तिस्सम्भवति । उपदेशस्याभ्यासविशेष-विषयत्वात् । अतिदेशस्याऽभ्यासयोः प्रकृतिविकारभावाभावेनासम्भ-वात् । पञ्चत्वविशिष्टप्राकृतावदानस्यैव वपोद्देशनविधौ प्रकृतविधेरेववपा-भ्यासापूर्वसाधनीभूतावदाने पञ्चत्वविधौ तात्पर्यान्नावदानान्तरे पञ्चत्व-विधिस्सम्भवतीति तदधिकरण सिद्धान्ताश्चिन्त्य एवेति नवपापददृष्टान्तेन यूपपदस्यावयुत्यानुवादत्वमिति । अतश्चाश्रयालाभान्न पशूद्देशेनौदुम्बरत्व-विधिस्सम्भवतीति वाक्याद्यूपाङ्गत्वमेवौदुम्बरतायाः । नच प्रकारान्तरेणा-श्रयालाभेऽपि प्रकृतवाक्य एवौदुम्बरत्वकरणकपशुकर्मकयूपाश्रयकभावना-विधिनाद्यूपात्मकौदुम्बरत्वाश्रयलाभः । आश्रयत्वस्य साध्यत्वातिरिक्तस्य दुर्वचत्वेन भावनाया अनेककर्मकत्वेन वाक्यभेदापत्तेः । यत्तु राणकेऽति-देशप्राप्तस्य पशुनियोजनस्य यूपद्वारा आश्रयत्वमाशङ्क्य प्रकृतौहि प्रत्य-क्षोपदिष्टस्य प्रणयनादेः पश्चात्साधनापेक्षायां चमसादिवत् फलार्थस्याऽपि गोदोहनादेराश्रयीभूतसाध्यापेक्षादर्शनादुभयाकांक्षावशात्साधनत्वमवसी-यते । नचैतावताङ्गत्वप्रसङ्गः । तादर्थ्येन विधानाभावात् । अत एव

(अनुवर्तते)

# अस्पृश्यशास्त्रार्थः

---

## अवतरणम्

अथातोऽस्पृश्यचण्डालकोलाहलविविक्तये ।
युक्तः प्रकरणारम्भः सर्वशास्त्रार्थसंग्रहः ॥
अत्रास्मिन् विषये शास्त्रे दृश्यमानानि सर्वशः ।
वचनानि प्रदर्श्यन्ते मुक्तवैषम्यया दृशा ॥
तात्पर्यनिर्णयः प्रायः पुंसंस्कारनिबन्धनः ।
सर्वत्र दृश्यते तस्मात् प्रमाणं हि मनीषिणः ॥
ननु लोकप्रसिद्धेनाचारेणैव विनिश्चयात् ।
किमनेन विचारेणेत्येवं केचित्प्रचक्षते ॥
वदन्त्यत्र विवेकज्ञाः लोकशास्त्राहितैषिणः ।
लोकपर्यायवृत्तान्तविज्ञानं प्रथमं फलम् ॥
द्वितीयं सर्वशास्त्रार्थचिन्तनं बह्वपेक्षितम् ।
कालादनादेस्सिद्धोऽयमाचारो नैव निर्दयः ॥
नाश्रौतो नापिचास्मार्तः नादृष्टानुपपत्तिकः ।
नाननुग्रहमूलोऽसौ नानुत्कर्षप्रयोजकः ॥
न लौकिकीनां सर्वासां संपदां विनिवारकः ।
न विद्याप्रतिरोध्येषः न वृत्तप्रतिबन्धकः ॥
न धर्मयोग्यताच्छेदी नोत्कर्षानवकाशकृत् ।
इत्याद्यर्था बहुविधाः विज्ञेयाश्शास्त्रदर्शिभिः ॥
अतोऽसूयाप्रशान्तिस्स्यादिति साधुरुपक्रमः ।
आस्तिकानां बालकानां व्युत्पादक इहान्ततः ॥

अत इदमुच्यते—पराशरेण (स्मृतिरत्नाकरे धर्मलक्षणे)

न सा सभा यत्र न सन्ति वृद्धाः
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥ इति ॥

## सामान्यवचनम्

अत्रादौ सामान्यवचनानीमानि सर्वनिबन्धकर्तृभिस्समुदाहृतान्युदाहरिष्यामः—यमः

वेदाः प्रमाणं स्मृतयः प्रमाणं
धर्मार्थयुक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत्प्रमाणं
कस्तस्य कुर्याद्वचनं प्रमाणम् ॥

प्रचेताः—

अमीमांसा बहिश्शास्त्राः येचान्ये वेदवर्जिताः ।
यत्ते ब्रूयुर्न तत्कुर्यात् वेदाद्धर्मो विधीयते ।

इति । शाण्डिल्यः—

यदुद्वेगकरं वाक्यमन्यथाऽर्थावबोधकम् ।
असत्यमनृतार्थं च नोच्चरेत्क्वापि गर्हितम् ॥

भगवानपि—

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥

इति । स्मृतिचन्द्रिकायां व्यवहारकाण्डे (२१ पु) नारदः—

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥

न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च ।
यं धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम् ॥

वीरमित्रोदये परिभाषाकाण्डे भविष्यपुराणम्—

दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथाऽपरा ।
स्यात् दृष्टादृष्टरूपान्या न्यायमूला तथा परा ॥
अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूलाः दृष्टार्थाः परिहृत्य तु ॥

इति ॥

## शुद्ध्यशुद्धी

अत्र सर्वस्यास्य विचारस्य मूलभूतं शुद्ध्यशुद्धिपदार्थं विचारयितुं प्रामाणिकैर्वाक्यैरेव प्रारभामहे । हेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ श्राद्धकल्पे परिभाषाप्रकरणे (७८७ पु.) "तत्राशुद्धिर्नाम द्रव्यादेः स्पर्शनाद्यनर्हतापादको दोषविशेषः । शुद्धिस्तु संस्कारविशेषोत्पादिता तन्निवृत्तिः । शुद्धिमत एव च सकलकर्मोपयोगयोग्यत्वम् तदुक्तं ब्रह्माण्डपुराणे—

श्रौतं स्मार्तं तथा कर्म कर्तव्यमधिकारिणा ।
शुचिना साधनैः शुद्धैः सम्यक् श्रद्धान्वितेन च ॥

इति । अतो यथाशास्त्रं शुचिना शुचिभिरेव द्रव्यैः प्रचरणीयम् ॥

नन्वत्र किं शास्त्रेण ? लोकव्यवहारेण प्रसिद्धत्वात् शुद्ध्यशुद्ध्योः। व्यवहरत्येव हि लोको जुगुप्सितमूत्रपुरीषादिसंस्पृष्टं द्रव्यमशुद्धमिति प्रक्षालनाद्यपनीतगन्धलेपं च शुद्धमिति । सत्यम्—किन्त्वयं लोकव्यहारः क्वचिदेव जुगुप्सितस्पर्शोपहत एव द्रव्ये, न सर्वत्र । सामान्यतश्चासौ व्यवहारः, न द्रव्यदेशकालावस्थादिकृतभेदशुद्ध्यशुद्धितारतम्यविशेषणापि। अतस्सर्वत्र विशेषतश्च शुद्ध्यशुद्ध्योश्शास्त्रादेव विनिश्चयः।

यस्तु चण्डालस्पर्शादावपि विशेषतश्च लोकव्यवहारस्स तु शास्त्रमूलिकामेव प्रसिद्धिमाश्रित्य, यागदानहोमादिषु श्रेयस्साधनत्वव्यवहारवत् ॥

कथंपुनः कार्यार्थपरेण धर्मशास्त्रेण शुद्ध्यशुद्धिरूपस्य सिद्धार्थस्यावगतिः ? श्रुतार्थापत्त्येति ब्रूमः । तथाहि—यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र क्षणिकानां यागानां श्रूयमाणकालान्तरभाविस्वर्गसाधनत्वान्यथाऽनुपपत्त्या सुकृतापूर्वसिद्धिः । यथा वा क्षणिकावगोरणस्य श्रुतकालान्तरभाविशतयातनासाधनत्वान्यथानुपपत्त्या दुरितापूर्वसिद्धिः, तथा मूत्रपुरीषादिस्पृष्टेन न व्यवहर्तव्यं, प्रक्षालनप्रोक्षणादिसंस्कारवता तु तेन व्यवहर्तव्यमितिश्रुतव्यवहारनिषेधतदभ्यनुज्ञान्यथाऽनुपपत्त्या द्रव्यादिगतशुद्ध्यशुद्ध्यादिरूपसिद्धार्थकल्पना न विरुद्ध्यते ॥

अथवा शुद्ध्यशुद्धिस्मृतीनां सिद्धार्थपरत्वमेवास्तु । तासां च तादृशमेव वेदवाक्यं मूलं कल्प्यते। स्मर्यमाणार्थानुसारिणी हि कल्पना। नास्ति नियमः कार्यार्थेनैव वाक्येन भाव्यमिति । अतश्शुद्ध्यशुद्धी उभे अपि शास्त्रावसेये। तदुक्तं "शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेत यथाश्रुति" इति तत्र सुवर्णादयः केचन भावाः स्वभावेनैव शुद्धाः। एवं चण्डालादिस्पर्शे शरीरमप्यकर्मण्यं भवति । स्नानादिभिश्शुद्धो भवतीत्यंशः अशुद्ध्यादिप्रदर्शकस्मृतिसिद्ध इति नात्र युक्तयः प्रक्रमन्ते" इति दृश्यते ॥

न्यायसिद्धाञ्जने स्पर्शविशेषनिरूपणप्रकरणे (४०७) "तत्रामृतगरलकपिकच्छूतूलोपलगोब्राह्मणचण्डालादिस्पर्शविशेषा अपाकजभेदाः। मृदुकठिनभावादयोऽपि स्पर्शविशेषा एव, स्पर्शनेनैव तदुपलब्धेः। चक्षुषा तु तदविनाभूतरूपादिग्रहणद्वारा स्पर्शमात्रस्यैव तेषामपि यथायथमनुमानमेव। करकादिकाठिन्यं पृथिवीयोगात्। मृदुपवनादिव्यवहारो वेगमान्द्यादिना ॥

केचित्तु तेषां संयोगविशेषत्वमातिष्ठन्ते । गोब्राह्मणचण्डालादिषु कथं स्पर्शभेद इति चेत्, तदर्धानशुद्ध्यशुद्ध्यादिभेदात् । जातिभेदादेव तदुपपत्तिरिति चेत् जातिभेद एव कुतः । मातापितृसंबन्ध प्रकारभेदादिति चेन्न–मानसब्राह्मणादिषु तदभावात् । यद्वा—धर्माधर्मतारतम्याधीनसत्वरजस्तारतम्यात् शक्तितारतम्याद्वा शुद्ध्यादिसिद्धिरिति न स्पर्शभेदास्ते" इति । अत्र मानसब्राह्मणादिष्विति पदे दृष्टिर्विधेया ॥

## जातिः

इदानीमिहोपलभ्यमानेषु सर्वेषु शास्त्रेषु प्रायेण जातिविषये त्रिविधा विज्ञायते गतिः–संततिविशेषप्रसूतिलक्षणजातिप्राधान्यवादः दयादाक्षिण्यविनयविद्याद्यन्वितवृत्तविशेषरूपाचारप्राधान्यवादः उभयसमीकरणलक्षणमध्यस्थतावादश्चेति । यथा दार्शनिकेषु सर्वशून्यवादः सर्वसत्यवादः मध्यस्थतारूपः तृतीयो वादः । यथा वा अधुनातनार्थशास्त्रविषये सर्वस्वातन्त्र्यवादः सर्वपारतन्त्र्यवादः मध्यस्थतावादश्चेति । एवं सर्वत्र ॥

चण्डालशब्दार्थस्तु चण्ड्यते कुप्यतीति । चडिकोपे । "पतिचण्डिभ्यामालञ्" इत्यौणादिकः आलञ् । इति गुणनिमित्तो व्यपदेशः पाणिन्यादिसंमतः । चण्डं विकटं अलं अलङ्कारो यस्येति उज्ज्वलदत्तादिसंमतः आचारनिमित्तो व्यपदेशः । वर्णसंकरजातिविशेष इति मन्वादिसंमतो जातिलक्षणप्रसूतिमूलो व्यवहारः । तस्यचैतस्य श्रुतिस्मृतीतिहासपुराणनामलिङ्गानुशासनादिभिः पर्यायेण व्यवहारस्तु—

चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ।
निषादश्वपचावन्तेवासिचाण्डालपुल्कसाः ।
भेदाः किरातशबरपुलिन्दाः म्लेच्छजातयः ॥

इति अमरसिंहेन संगृहीताः । मनुनातु (१०)

तपोबीजप्रधानैस्तु ते गच्छन्ति युगेयुगे ।
उत्कर्षंचापकर्षं च मनुष्येष्विह जन्मतः ॥

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाश्शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे वै दस्यवः स्मृताः ॥

इति । ये त्वत्र ऋग्वेदे चण्डालशब्द एव नास्तीति वदन्ति । ते ह्यत्रत्येन दस्युपदेन प्रतिबोधनीया भवेयुः ॥

अस्पृश्यः

अत्र स्पर्शो नाम त्वगिन्द्रियद्वारं स्पृश्यसंवेदनम् । तत्र सामान्येन ब्राह्मणस्पर्श एव सर्वेषां प्रतिषिद्धः । तथाहि—आपस्तम्बधर्मसूत्रे (१–३१–६) "ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् । हस्तेन चाकारणात्" इति । अयमर्थः—ब्राह्मणं गां च पादेन नोपस्पृशेत् । इति शब्दः प्रकारे । तेन विज्ञानवयोवृद्धानां अब्राह्मणानामपि वर्जनम् । कारणं अभ्यङ्गकण्डूयनादि । तेन विना हस्तेनापि । उपस्पर्शनं वर्जयेत् । इति । एतेन ब्राह्मणादयः पश्वादयोऽपि कारणं विना नोपस्पृश्या इत्यार्याणां संप्रदायः । "तस्माद्दीक्षितो नोपस्पृश्यः" इति "तस्माद्यूपो नोपस्प्रष्टव्यः" "कपिलां गां तु संस्पृश्य प्राणायामोऽधिको मतः" (चतु ८०२) इत्यादीनि श्रुति स्मृति वचांसि प्रायश्चित्तप्रतिपादकानि बहून्युपलभ्यन्ते । तदर्था अपि शिष्टेननुष्ठीयन्ते । इति शास्त्रमर्यादा । अत एव—

अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
मन्दवारे स्पृशेत्पूर्वमुत्तरं पर्वणि स्पृशेत् ॥

इत्यादीनि वचनानि बहूनीत्युपरम्यते ॥

## मनुस्मृतिः

चण्डालपदव्यवहारविषयः अस्पृश्य इत्यत्र मनुः---५-८५.

दिवाकीर्तिमुदक्यां च पतितं सूचिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥

कुल्लूकव्याख्यानम्---दिवाकीर्तिः चण्डालः । चण्डालं रजस्वलां ब्रह्महादिकं प्रसूतां दशाहाभ्यन्तरे शवं शवस्पृष्टिनंच स्पृष्ट्वा स्नानेन शुध्यति। केचित्तु तत्स्पृष्टिनमिति चाण्डालोदक्यादिभिस्सर्वैस्संबन्धयन्ति। गोविन्दराजस्तुयाज्ञवल्क्यवचनात् शवस्पृष्टिनमेव तत्स्पृष्टिनमाह। नोदक्यादिस्पृष्टिनम्। तत्राचमनविधानात्। तदाह याज्ञवल्क्यः "उदक्याशुचिभिस्स्नायात्संस्पृष्टः तैरुपस्पृशेत्" इति । उदक्याशुचिभिः स्पृष्टः स्नानं कुर्यात् । तैः स्पृष्टैः स्पृष्टस्तूपस्पृशेत् आचामेदिति । स्मृतिचन्द्रिकायां (२९) इदं मनुवचनमुपात्तमस्ति—

न शूद्रराज्ये निवसेत् नाधार्मिकजनावृते ।
न पाषण्डिद्विजाक्रान्ते नोपस्पृष्टेऽन्त्यजैः नृभिः ॥

इति । एतेन अन्त्यजस्पृष्टदेशवासोऽपि प्रतिषिद्धो विज्ञायते ॥

## याज्ञवल्क्यस्मृतिः

याज्ञवल्क्यः---(३-३०)---

उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा जपेत् ॥

अत्र मिताक्षरा---उदक्या रजस्वला । अशुचयः शवचण्डालपतितसूतिकाशवाशौचिनश्च । तैः संस्पृष्टस्स्नायात् । . . . । व्याघ्रपादः---

चण्डालं पतितं चैव दूरतः परिवर्जयेत् ।
गोवालव्यजनादर्वाक् सवासा जलमाविशेत् ॥

एतदतिसंकटस्थानविषयम् । अन्यत्र तु बृहस्पतिनोक्तं—

युगं युगद्वयं चैव त्रियुगं च चतुर्युगम् ।
चण्डालसूतिकोदक्यापतितानामधःक्रमात् ॥

इति । अत्रैव । स्पृष्ट्वा देवलकंचैव सवासा जलमाविशेत्—

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
असौ देवलको नाम हव्यकव्येषु गर्हितः ॥

इति । तथा ब्रह्माण्डपुराणे—

शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ।
विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत् ॥

इति । तथा—"अस्वस्त्या ह्याहुतिस्सा स्यात् शूद्रसंस्पर्शदूषिता" इतिलिङ्गाच्च शूद्रस्पर्शनिषेधः ॥

## स्मृतिचन्द्रिकादिः

स्मृतिचन्द्रिकायां नैमित्तिकस्नानप्रकरणे (३०७ पु.) वैयाघ्रपादेऽपि—

चण्डालं पतितं चैव दूरतः परिवर्जयेत् ।
गोवालव्यजनादर्वाक् स वासा जलमाविशेत् ॥

इति । एतदतिसंकटस्थानविषयमितिकैश्चिद्व्याख्यातम्, (मिताक्षरा) इति । अत्रैव प्रकरणे प्रचेताः—

वस्त्रान्तरितसंस्पर्शम्साक्षात् स्पर्शोऽभिधीयते ।
साक्षात् स्पर्शे तु यत्प्रोक्तं तद्वस्त्रान्तरितेऽपि च ॥

इति । अस्मिन्नेव विषये अंगिरो गौतम संवर्त मरीचि कूर्मपुराणदेवल वृद्धशातातप कात्यायनादित्यपुराण प्रचेतोव्यास वैयाघ्रपाद विष्णु पराशरापस्तम्ब संग्रहकारादि वचनान्युपादाय महान् विचारः कृतोऽस्ति । सर्वथा

अस्पृश्यता निर्णीता । प्रायेण निबन्धकारैस्सर्वैरपीमान्येव वचनान्युदाहृत्य स्वीयाः प्रबन्धाः परिष्कृताः । स्मृतिरत्नाकरे त्वेष विशेषः । व्यासः—

लवणं गुडकार्पासं कौसुम्भं तैलसर्पिषी ।
चण्डालाद्यैस्तु संस्पृष्टं प्रोक्षणादेव शुध्यति ॥

इति ।

देशं कालं वयश्शक्तिं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरेत् ॥

इति च । याज्ञवल्क्यविष्णू—

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ॥

मनुवसिष्ठबोधायनाः—

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिः निर्णिक्तं यश्च वाचा प्रशस्यते ॥

इति । अत्रैव (३१९) शातातपः स्मृतिचन्द्रिकायाम्—

ग्रामे तु यत्र संस्पृष्टिः यात्रायां कलहादिषु ।
ग्रामसंदूषणे चैव स्पृष्टिदोषो न विद्यते ॥

ग्रामे राजमार्गादौ । षट्त्रिंशन्मतेपि—

देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥

बृहस्पतिरपि —

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरग्रामदाहे वा स्पृष्टास्पृष्टिर्न दुष्यति ॥

एतच्च वाक्यत्रयं यत्राहमनेन स्पृष्ट इति ज्ञानं नास्ति तद्विषयमिति केचित् । उच्छिष्टाशुचिस्पर्शनविषयमित्यन्ये ॥

पाञ्चरात्ररक्षायां—(८६) वाराहे—

विष्णुस्थानसमीपस्थान् विष्णुसेवार्थमागतान् ।
श्वपचान् पतितान्वापि स्पृष्ट्वा न स्नानमाचरेत् ॥
उत्सवे वासुदेवस्य यः स्नाति स्पर्शशंकया ।
स्वर्गस्थाः पितरस्तस्य पतन्ति नरके क्षणात् ॥

इति । प्रपन्नधर्मसारसमुच्चये—(७४) पाद्मे—

विष्ण्वालयसमीपस्थान् विष्णुसेवार्थमागतान् ।
अन्त्यजान् पतितान्वापि स्पृष्ट्वा न स्नानमाचरेत् ॥
विष्ण्वालयान्तिकस्थानां तत्सेवार्थमुपेयुषाम् ।
स्पर्शस्सर्वापगास्नानात् अतिरिक्ततमो मतः ॥ इति ॥

मीमांसा

पूर्वमीमांसायां (१-३-२) विरोधाधिकरणे स्पर्शविषये कश्चिदस्ति विचारः । तत्रहि औदुम्बरीनामिकायाः उद्गात्रपाश्रयभूतायाश्शाखायाः वस्त्रेण वेष्टनं स्मर्यते "औदुम्बरी सर्वा वेष्टयितव्या" इति । अस्या एव स्पर्शश्श्रूयते "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति । तत्र सर्ववेष्टनस्पर्शविषययोः स्मृतिश्रुत्योः विरोधो विज्ञायते इतीदमुदाहरणं दत्त मस्ति श्रुतिस्मृत्योर्विरोधविषये । तत्रत्यं तन्त्रवार्तिकं (९८) कौमारिलम्—"ननु च पूर्वकृतसर्ववेष्टनोत्तरकालविहितं वेष्टिताया एव स्पर्शनं सम्भवतीत्यविरोधः? कथमविरोधः? यदा स्पर्शनं नाम त्वगिन्द्रियद्वारं स्पृश्यसंवेदनम् । न च वस्त्रान्तरिताया उदुम्बर्याः स्पर्शो गृह्यते । न च वस्त्रे स्पृश्यमाने औदुम्बरी स्पृष्टा भवति । वस्त्रौदुम्बरीजातिव्यक्तिस्पर्शानामत्यन्तभेदात् ॥

अथ संबन्धिसंस्पर्शात् स्पृष्टैवेत्यभिधीयते ।
भूमिस्पर्शेन तत्सिद्धेः वृथा स्पर्शविधिर्भवेत् ॥

ननु भूमावौदुम्बरीबुद्ध्यभावात् वस्त्रान्तरितायां च तद्बुध्यव्यतिरेकात् दृष्टान्तवैषम्यम् । तथाहि—

वस्त्रान्तरितचण्डलस्पर्शेऽप्यापतिते क्वचित् ।
साक्षात् स्पृष्टवदेवेष्टा सचेलस्नानशुद्धता ॥
सत्यं तत्रेष्यतेस्नानं तद्वस्त्रस्पर्शकारितम् ॥
अशुद्धिकारणं तद्धि चण्डालस्पर्शवन्मतम् ॥
तथा च तद्वियुक्तेऽपि वस्त्रे तत्स्पर्शदूषिते ।
स्पृश्यमाने भवत्येव दोषस्संयुक्तवस्त्रवत् ॥

कथं पुनरयं धर्मशास्त्रेष्वनुपनिबद्धोऽपि चण्डालस्पृष्ट वस्त्रस्पर्शननिमित्तो दोषोऽध्यवसीयते?

कथं वा नेष्यते दोषः काष्ठलोष्टतृणादिषु ।
तत्स्पृष्टस्पृश्यमानेषु न क्रमन्तेऽत्र युक्तयः ॥

तदुच्यते—

यथाकाष्ठतृणादीनां मारुतादेव शुद्धता ।
स्मर्यत वाससो नैवं तोयप्रक्षालनाद्विना ॥
नन्वमेध्येन लिप्तस्य सा शुद्धिरभिधीयते ।
न लिप्तग्रहणं तत्र पाठेऽस्ति तु चिरंतने ॥

अमेध्यस्यैवं यस्मात्पठन्ति । चण्डालस्पृष्टवाससश्च अस्त्येवामेध्यता । तस्मादस्ति सलिलादिशुद्धिः ॥

ननु च मनुष्यस्यैव चण्डालस्पर्शनिमित्तप्रायश्चित्तविधानात् अशुद्धिरूपममेध्यत्वं गम्यते, न द्रव्यान्तरस्य गवाश्वादेः । ततश्च वस्त्रं किं गवाश्वादिवददुष्टं उत पुरुषवत् दुष्टमिति संदेहे गवाश्वादितुल्यमेवावधारयितुं युक्तम् । उच्यते—

पुरुषस्य सचेलस्य स्नानं यस्माद्विधीयते ।
तस्मात्पुरुषवद्वस्त्रं न गवाश्वादिवन्मतम् ॥

यद्यापि हि शुद्धेनैव हस्तादिना चण्डालः स्पृश्यते ॥

गवादीनां तु चण्डालादिस्पृष्टानां स्नानप्रक्षालनविध्यभावात् शुद्धिर्विज्ञायत इति न तन्मध्यपतितत्वम्। अतश्च नानेन प्रकारेण औदुम्बरी संबद्धवस्त्रस्पर्शनात् तत्स्पर्शनज्ञानोपपत्तिः। यदातु तयैवोद्गाता स्पृष्ट उद्गायेदिति विधिः तदाऽवश्यमेवौदुम्बरीत्वचा उद्गातृशरीरं प्राप्तव्यम्। अपाश्रयणाभ्युपगमपक्षोऽपि च स्पृष्टत्वापरित्यागेनैव स्थित इति न समस्ताच्छादितायामवकल्पते। पराश्रितमपि च वस्त्रमुद्गातुराश्रयत्वं प्रतिपद्यते। तेनैवौदुम्बर्याश्रितेनोद्गायेत्। तस्मादस्ति सर्ववेष्टनस्पर्शनयोः विरोध इति युक्तं बाध्यबाधकभावव्यवस्थापनम्" इति ॥
अत्र चण्डालस्पर्श एवोपात्तः न तु सन्निधिरित्यवकाशोऽस्ति प्रसङ्गस्य ॥

आगमः

ईश्वरसंहितायां १८ अ—

चण्डालैस्सूतिकोदक्या म्लेच्छैर्वा पुल्कसादिभिः।
संस्पृष्टे भगवद्बिंबे गोघृतेनाभिषिच्य तम् ॥
संप्रोक्षणं च विधिवत् कृत्वा शान्तिं समाचरेत्।
गोदानादींस्तथा कृत्वा ब्राह्मणांश्चापि भोजयेत् ॥
तैरग्रमण्टपाभ्यन्तः प्रथमावरणेपि वा।
प्रवेशे धामसंशुद्धिं प्राग्वत्कृत्वा मुनीश्वराः।
अधमोत्तममार्गेण स्नापयेत्पुरुषोत्तमम् ॥
द्वितीयावृतिमारभ्य रथ्यावरणपश्चिमम्।
तैरन्तस्संप्रविष्टे तु कृत्वालयविशोधनम्।
अधमाधममार्गेण देवं संस्नापयेत् द्विजाः ॥ १६३ ॥

इत्यादि ॥

वैखानससंप्रदायेऽपि विमानार्चनकल्पे (६९) पटले (४१७) "पञ्चमहापातकैः चण्डालाद्यैश्चालये प्रविष्टे तत्स्पृष्टहविर्निवेदने च

सप्ताहं महाशान्तिं हुत्वा देवं कलशैस्संस्नाप्य पुनः प्रतिष्ठां कारयेत्" इति दृश्यते ।

आगमानुग्रहः

पराशरसंहिता — ३ पु.—

पाकश्शय्याऽसनं पङ्क्तिभाण्डपक्वान्नमिश्रणम् ।
याजनाध्यापने दानं तथैव सहभोजनम् ॥
नवधा संङ्करः प्रोक्तः न कुर्याच्चाधर्मैस्सह ॥ इति ॥

२९. पु.—

प्रपन्नानां सदा सम्यक् विष्णोर्दास्यं चतुर्विधम् ।
पतिभार्यादिसंबन्धः पितृपुत्रादिकं तथा ॥
स्वामिभृत्यादिसंबन्धः शिष्याचार्यादिकं तथा ।
एतच्चतुर्विधं दास्यं विष्णोः प्रीतिकरं सदा ॥
सर्वेषां विष्णुसायुज्यसिद्धये श्रुतिचोदितम् ॥

३४ पु.—

शूद्रवैष्णवष्णवहस्तेन ह्यन्येषां मुक्तिसिद्धये ।
पञ्चसंस्कारदीक्षादीन् दत्वानुज्ञां च कुर्विति ॥
नियम्यस्स्यात्समन्त्रेण कुर्याद्वा वैष्णवाग्निना ।
चण्डालम्लेच्छजातीनां कुर्यान्मोक्षादिसिद्धये ॥
जातिहीनप्रपन्नानां स्नानवेषादिकं सदा ।
भाण्डान्नशुद्धिरित्यादि शेषं शूद्रप्रपन्नवत् ॥
विष्णुसायुज्यपर्यन्तं तारतम्यं समाचरेत् ॥ इति ॥

कामिकागमे उत्तरभागे निर्वाणदीक्षापटले चण्डालस्यापि दीक्षायामधिकारः प्रादीयत । अन्त्येष्टिविधिपटले निर्वाणदीक्षादीक्षितानां आशौचदशायामपि देवालयाख्यप्रासादादिप्रवेशनं अग्रमण्डपबाह्यस्थानस्थितिश्चान्वमन्यत । ततः प्रायश्चित्तविधिपटले निर्वाणदीक्षारहितानां संस्पर्शे प्रायश्चित्तमप्यव्यधीयत इति स्पष्टमवगम्यते ॥

न्यायजाः शुद्धजात्या वा दीक्षायामधिकारिणः ।
जामातृपितृपत्न्याद्याः योग्यास्स्युर्मोक्षकांक्षिणः ॥
दीक्षाकर्ता शिवो यस्मात् तेषां तस्मान्न पुत्रता ।
अन्त्यजानां न होत्री स्यात् किंतु तेषां तु चाक्षुषी ॥

इति सर्वेषां दीक्षाधिकारः ॥ ६४ पु. ॥

निर्वाणदीक्षितस्यापि शिखाच्छेदयुतस्य च ।
नित्यनैमित्तिके काम्ये सर्वत्रैवाधिकारिता ॥
शिखाच्छेदविहीनस्य नित्यकर्मणि योग्यता ।
एतेषामेव सर्वेषां प्रासादादिप्रवेशनम् ॥
अग्रमण्डपबाह्ये तु न दोषाय प्रकल्पते ॥

इति आशौचिनां आलयप्रवेशाधिकारः ॥ ८६ पु. ॥

निर्वाणदीक्षया हीनैः शूद्राद्यैस्समयस्थितैः ।
परार्थं स्थापिते लिंगे स्पृष्टे गर्भे प्रवेशिते ॥
आशौचिभिः त्रिवर्णाद्यैः अन्तर्मण्टपवेशने ।
एवमादिषु कृत्येषु प्रायश्चित्तं विधीयते ॥

इति दीक्षारहितस्पर्शनिषेधः ॥ १०५ पु. ॥

आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् ।
पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम् ॥

इति पौष्करसंहितावचनमुदाहृत्य पाञ्चरात्ररक्षायां (८२) "अन्यत्रापि महतामपि पातकानां प्रायश्चित्ततया विधीयते" इत्यनुगृहीतम् । तथा—सहस्रनामभाष्ये (६०४)—

सप्तजन्मकृतं पापं स्वल्पं वा यदिवा बहु ।
विष्णोरालयविन्यासप्रारम्भादेव नश्यति ॥

इति विष्णुधर्म (८३-२०) वचनमुदाहृतम् ॥ तथा—

यो न वित्तैर्न विभवैः न वासोभिर्न भूषणैः ।
तोष्यते हृदयेनैव कस्तमीशं न पूजयेत् ॥

इति च विष्णुधर्मवचनं (९०-६९) तत्रैवोदाहृतम् ॥

अगमप्रामाण्ये (६७) अन्त्यानामपि सामान्यतः अनुग्रहस्सूचितः—"आयतनशोधनादिकुर्वतां प्रासादपालकापरनाम्नामन्त्यानां च" इति ॥

धर्माधिकारः

महाभारते शान्तौ राजधर्मे (७५) अध्याये मान्धाता—
यवनाः किराता गान्धाराः चीनाश्शबरवर्बराः ।
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः ॥
पौण्ड्राः पुळिन्दाः रमठाः काम्भोजाश्चैव सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याश्शूद्राश्च मानवाः ॥
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ॥
एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥

इन्द्रः—

मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ।
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ॥
पितृयज्ञास्तथाकूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं द्विजेभ्यो विसृजेत्सदा ॥

अहिंसा सत्यमक्रोधः वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एवच ॥
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च दातव्यास्सर्वदस्युभिः ॥
एतान्येवंप्रकाराणि विहितानि पुरानघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥ इत्यादि ॥

"न शूद्राय मतिं दद्यात्" इत्यादयो निषेधवादाः अनाश्रितविषया इति सर्वसम्मतमेतत् ॥

**विद्याधिकारः**

विद्यानिबन्धनं गौरवमित्थं मन्वादिभिः प्रदर्शितमुदाहरामः—मनुः

श्रद्दधानश्शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तं अमेध्यादपि काञ्चनम् ॥

मोक्षधर्मे व्यासः—

विष्णुर्नित्यं विद्यया तात ईड्यः
तस्मात् ज्ञानं नित्यरूपं वरेण्यम् ।
प्राप्यं ज्ञानं ब्राह्मणात् क्षत्रियाद्वा
वैश्यात् शूद्राद्वापि नीचादभीक्ष्णम् ॥ इति ॥

आपस्तम्बधर्मे "सा निष्ठा या स्त्रीषु शूद्रेषु च" स्त्रीषु शूद्रेषु च या विद्या अस्या अपि परिग्रहः विद्याभ्याससमाप्तिरिति ॥

**वृत्तम्**

आदिकृतयुगे ब्राह्मणा एव सर्वे मनुष्या आसन् । ततश्च शनकैश्च क्रियालोपात् वृत्तिभिर्वर्णतां गता इति महाभारतादिषु बहुशः प्रपञ्चितम् ।

अनूदितश्चायमार्थः सच्चरित्ररक्षायां श्रीमद्भिः वेदान्ताचार्यैः । महाभारत-वचनमेकमत्र प्रदर्श्यते । शान्तौ मोक्षधर्मे (३३४) अध्याये "तस्य वरप्रदस्य देवदेवस्य ब्राह्मणाः प्रथमं प्रादुर्भूताः । ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूताः" इति । तथा—(१८८ अ)

नविशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्राह्मणाः पूर्वसृष्टा हि कर्मभिर्वर्णतां गताः ॥

इति । विश्वेश्वरसरस्वतीये यतिधर्मसङ्ग्रहे—व्यासः ३७ पु.

न जातिः कारणं तात गुणाः कल्याणकारकम् ।
वृत्तस्थमपि चण्डालं तं देवाः ब्राह्मणं विदुः ॥

वह्निपुराणे—चतुर्वर्गचिन्तामणौ परिशेषखण्डे—३४२

न जातिर्न कुलं राजन् न स्वाध्यायो न च श्रुतम् ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः ।
क्रिमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥
कपालस्थं यथा तोयं श्वदृतौ च यथा पयः ।
हेयं दुस्थानदोषेण वृत्तहीनं तथा श्रुतम् ॥
बहुना किमधीतेन नटस्येव दुरात्मनः ।
तेनाधीतं श्रुतं वापि यः क्रियामनुतिष्ठति ॥

यमः—

सत्यं दानं क्षमा शीलं आनृशंस्यं दया घृणा ।
दृश्यन्ते यत्र लोकेऽस्मिन् तं देवा ब्राह्मणं विदुः ॥

दक्षः—

परहिंसापरः क्रूरः परदारपरायणः ।
परद्रव्याभिलाषी च स चण्डालो हि निर्दयः ॥

**वृत्तसमन्वयः**

तदेतत्सर्वं न ब्राह्मणत्वजातिनिराकरणेन शीलवृत्तादेरेव ब्राह्मण-शब्दप्रवृत्तिनिमित्तत्वप्रतिपादनपरम्, किंतु हव्यकव्यभोक्तृत्वार्हतापादक-ब्राह्मणगतप्राशस्त्यप्रतिपादनपरम्। "अपशवोवा अन्ये गोअश्वेभ्यः पशवोगो अश्वाः" इत्येतद्यथाग वाश्वप्राशस्त्यप्रतिपादनपरम्। अतएव बौधायनः—

विद्या तपश्च योनिश्चेत्येतद्ब्राह्मण्यकारकम्।
विद्यातपोभ्यां यो हीनः जातिब्राह्मण एव सः॥

इति। जातिब्राह्मण एवेत्यत्र जात्यैव स ब्राह्मण इत्यन्वयविग्रहौ। अत एव विद्यादियोगः ब्राह्मणानां पात्रत्व एव स्मृतिपुराणेषु हेतुरुक्तो न ब्राह्मणशब्दप्रवृत्ताविति॥

जातिप्राधान्यमित्थं पराशरमाधवीये ८-२५ प्रतिपादितम्—

दुश्शीलोऽपि द्विजः पूज्यः न शूद्रो विजितेन्द्रियः।
कः परित्यज्य दुष्टां गां दुहेत् शीलवतीं खरीम्॥ इति॥

ये ब्राह्मणास्तेऽहमसंशया नृप
तेष्वर्चितेष्वर्चितोऽहं यथावत्।
तेष्वेव तुष्टेष्वहमेव तुष्टः
वैरं च तैर्यस्य ममापि वैरम्॥

इत्यादि। अपराधपरिहाराधिकारे विस्तरो द्रष्टव्यः॥

**संप्रदायविचारः**

न शूद्रा भगवद्भक्ताः विप्रा भागवताः स्मृताः।
सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने॥
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः।
चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः॥

प्रत्यवसिताः पुनरागता इत्यर्थः । आरूढपतिता इति यावत् ॥

मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् ।
मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ॥
स्वयमाराधने यत्नः ममार्थे दम्भवर्जनम् ।
ममानुस्मरणं नित्यं यच्च मां नोपजीवति ॥
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥ इति ॥
नारायणैकनिष्ठस्य याया वृत्तिस्तदर्चनम् ।
योयो जल्पस्सस जपः तद्ध्यानं यन्निरीक्षणम् ॥
तत्पादाम्ब्वतुलं तीर्थं तदुच्छिष्टं सुपावनम् ।
तदुक्तिमात्रं मन्त्राग्र्यं तत्स्पृष्टमखिलं शुचि ॥
न परीक्ष्य वयो वन्द्याः नारायणपरायणाः ।
अपि स्युः हीनजन्मान मान्या निम्नेन चेतसा ॥
यश्शूद्रं भगवद्भक्तं निषादं श्वपचं तथा ।
वीक्षते जातिसामान्यात् स याति नरकं ततः ॥
मद्भक्तं शूद्रसामान्यादवमन्यन्ति ये नराः ।
नरकेष्ववतिष्ठन्ति वर्ष कोटीः नराधमाः ॥
अनाचारान् दुराचारान् अज्ञातृन् हीनजन्मनः ।
मद्भक्तान् श्रोत्रियो निन्दन् सद्यश्चण्डालतां व्रजेत् ॥

इत्यादीनि बहूनि वचनान्युदाहृतानि सांप्रदायिकप्रबन्धेषु प्रामाणिकानि। एतावता विस्तरभयादुपरमः ॥

अर्जुनं युधिष्ठरं च प्रति भगवद्वचनम्—

अपिचेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो सि सः ॥

अपि पापेष्वभिरताः मद्भक्ताः पाण्डुनन्दन ।
मुच्यन्ते पातकैस्सर्वैः पद्मपत्रमिवाम्भसा ॥ इति ॥
एकोऽपि कृष्णे सुकृतः प्रणामः
दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥
कुयोनीष्वपि संजातः यस्सकृच्छरणं गतः ।
तं मातापितृहन्तारमपि पाति भवार्तिहा ॥
तस्माद्विष्णुप्रसादाय वैष्णवान् परितोषयेत् ।
प्रसादसुमुखो विष्णुस्तेनैव स्यान्न संशयः ॥ इति

एतादृशानां वचनानां तात्पर्यनिर्णये त्रयो मार्गाः ग्रन्थेषु समुपलभ्यन्ते । एकः—अपकृष्टजातीयानामपि भगवत्सबन्धलक्षण-भागवतत्वेनापकृष्टा जातिर्विनश्यति, उत्कृष्टब्राह्मणत्वादिजातिरुत्पद्यते । तथा भागवतापचारादिदोषेण विपरिवर्तश्चेति । द्वितीयः—सर्वासामप्यपकृष्टानामुत्कृष्टानां च ब्राह्मणत्वचण्डालत्वादिरूपाणां जातीनां विनाशः । विष्णुभक्तानां वैष्णवत्वरूपा एका जातिरुद्भवतीति ॥ तृतीयस्तु— जन्मसिद्धा जातिर्न विनश्यति । गुणप्रयुक्ता जातिरुत्कृष्टाऽपकृष्टा वाऽऽविर्भवति । तन्निबन्धनाः नियताः शास्त्रसिद्धाः व्यवहाराः परस्परेणाबाधिता भवेयुः । क्वाचित्काः पुनरुपाख्यानेषु श्रूयमाणाः विरुद्धास्तु संव्यवहाराः नियतिविशेषनियताः नानुवर्तनीया इति ॥

अत्र प्रथमद्वितीयपक्षौ दक्षिणविद्याचार्यसंमतौ । तृतीयस्तूत्तरविद्याचार्यसंमतः । अत्रायमेकः प्रबन्धः—श्रीलोकाचार्यप्रणीते श्रीवचनभूषणे द्वितीयप्रकरणे भागवतापचारनिरूपणसंदर्भे "भागवतेषु जन्मचिन्तनं क्रूरतम् । कर्मचण्डालतामुत्पादयति । जातिचण्डालस्य कदा-

चित् भागवतीभवितुमस्ति योग्यत्वम् । कर्मचण्डालस्य तु नास्ति तदप्यारूढपतितत्वात्'' इत्यादिना बहुना प्रबन्धेन त्रिशङ्कुविश्वामित्रादिवृत्तान्तोदाहरणपरिपूर्णेण प्रागुक्तं मार्गद्वयमभिप्रेत्य तदनुगुणं क्वचनविषये संव्यवहरणमपि प्राचीनमैतिह्यरूपेण काचित्कमुपदर्शितम्। न पुनरेतन्मार्गद्वयं स्वानुष्ठानेन वा स्वकीयानुष्ठानेन वा सार्वत्रिकतां सर्वगोचरतां वा समुपसंपादितम् । विचारः परमद्यापि प्रचरति ॥

अथायमपरः प्रबन्धः तृतीये मार्गे—श्रीवेदान्ताचार्यप्रणीते रहस्यत्रयसारे प्रभावव्यवस्थाधिकारे—''तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्कटम्'' इत्युक्तप्रकारेण सत्त्वादिगुणतारतम्यमूलं शारीरं ब्राह्मण्यादिकमन्यत् । तादृशसत्त्वादितारतम्यनिबन्धनं सर्वास्वपि जातिषु प्रशंसादिवाक्यैरुद्गीयमानं मानसं ब्राह्मण्यादिकमन्यत् । शारीरगुणविशेषव्यवस्थिताः ब्राह्मणत्वादयः जातिविशेषाः औत्पत्तिकाः मरणान्तिकाः स्थिरा एव । मानससत्त्वादिगुणोन्मेषादिमूलाः ब्राह्मणत्वादयः सर्वेषामपि जातीयानां संभाविताः । तत्र प्रह्लादादिषु जन्मसिद्धाः । इतरेषु सदाचार्यसंबन्धविशेषादागन्तुकाः । तत्र शारीरजातिनिबन्धनाः नियताः केचन नियमाः । मानसजातिनिबन्धनाः पुरुषार्थतदुपायप्रशंसादयः सर्वसाधारणाः । सर्वत्र शारीरो वा मानसो वा संभावितस्समुत्कर्षः गर्वहेतुश्चेदनर्थकरः । उभयत्र संभाव्यमानस्त्वपकर्षः स्वस्वरूपविज्ञानेन कार्पण्यमभिवर्धयन् अकिंचनाधिकारे उपायविशेषे प्रवर्तयति चेत् पुरुषार्थहेतुत्वेन श्लाघ्य एव । एवं जातिव्यवस्थायां जात्यनुगुणवृत्तव्यवस्थायां सत्यामपि सर्वेषां भागवतत्वनिबन्धनाया उद्देश्यत्वप्रतिपत्तेर्न विरोधः'' इति । उद्देश्यत्वं नाम भागवतत्वनिबन्धनं शेषित्वम् ॥

भगवद्गीताभाष्यतात्पर्यचन्द्रिकायां (१८-४४) ''शमादिगुणपौष्कल्ययोगिनि तु शूद्रादौ स्त्रीधर्मिण्यां जनन्यामिव अवज्ञानादिनि-

वृत्तिमात्रविशेषापेक्षया जातिसामान्यवीक्षणप्रतिषेध इति" इत्यभिहितमस्ति ॥

अयमत्र सारार्थः—

प्रतिपत्तिविशेषार्थ मन्यत्रान्यत्वकीर्तनम् ।
विशेषविधिसाकांक्षाः तत्र तत्र प्रवृत्तयः ॥
अतो जातेः निकृष्टायाः सर्वस्या वा विनाशः ।
साचात्यं विष्णुभक्तानामिति मन्दमिदं वचः ॥
वैष्णवत्वेन मान्यत्वं समानं मुनिसंमतम् ।
जात्यादिध्वंसतस्साम्यं मुक्तिकाले भविष्यति ॥
आहारगृह्यमन्त्रार्थं जात्यादिनियमैर्युतः ।
कुर्याल्लक्ष्मीशकैंकर्यं शक्त्याऽनन्यप्रयोजनः ॥

इति । स्तोत्रभाष्ये—

महतामपि केषांचिदतिवादाः पृथग्विधाः ।
तत्तदर्थप्रशंसादि तत्परत्वादबाधिताः ॥ इति ॥

## भगवद्गीता

अत्रायमपरो विचारः—चत्वार एव वर्णाः । चण्डालजातिरिति विभागो नाम कश्चिन्नास्तीति केचिदेकदेशविज्ञानवन्तः वदन्ति, यतस्सर्वेषु आर्यप्रबन्धेषु जातिनिर्णयप्रकरणे संकरजातयः सम्यगेव निरूपिताः । भगवद्गीतायां चतुर्णामेव वर्णानां निर्देशोऽस्तीति ते कथयन्तीति श्रूयते । तत्रेत्थं प्रतिबोधनीयास्ते महात्मानः पुनरेतैः श्लोकैः—

स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ।
संकरो नरकायैव कुलघ्नानां कुलस्य च ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनिचैव श्वपाके च पण्डितास्समदर्शिनः ॥
दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचस्संपदं दैवीमभिजातोऽसि पाण्डव ॥
मां हि पार्थव्यपाश्रित्य येऽपि स्युःपापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
अथवा योगिनामेव कुले भवति धीमताम् ॥

इत्यादिभिः । एतेषां वचना नामुपबृंहणीया उपानिषदस्तु—"तद्य इह रमणीयचरणाः अभ्याशोह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणाः अभ्याशोह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" इत्याद्याः छन्दोग्यादयः ॥

यश्चायमन्योऽप्यत्यल्पो विचारः— मन्वादिधर्मशास्त्रोक्तलक्षणस्वरूपाचारविशिष्टाः चण्डालाः अधुना न सन्तीति । एतादृशविचारचातुरीधुरीणाः एवं प्रष्टव्याभवेयुः—अधुना किं निरुक्तलक्षणलक्षिताः ब्राह्मणाद्यास्सन्तीत्यभिमानः? आहोस्विन्नत्तेऽपि सन्तीति? आद्ये पक्षे कोऽयमियान् पक्षपातः सर्वत्र समदृष्टिमताम्? अनन्तरे पक्षे व्यवहारमात्रपात्रीभूताः ब्राह्मणादय इव चण्डाला अपि सन्तीत्यायुष्मानेव विमृशतु । अधिकं ब्राह्मणपरीक्षायां द्रष्टव्यम् ॥

**स्वतन्त्रविचारः**

सर्वेष्वपि मनुष्यशरीरेषु विद्यमानः आत्मपदवाच्यः एकव्यक्त्यात्मको वा अत्यन्तसाम्यावस्थायोग्यानेकव्यक्त्यात्मको वा स्वभावतः शुद्धोऽप्युपाधितः अशुद्ध इति आत्मास्तिवादिनामास्तिकानां सर्वेषां

संमतोऽयमर्थः । ये च पुण्यपापलक्षणमदृष्टमीश्वरं चाभ्युपगन्तारस्सर्वेऽपि ते उत्पत्तिनिबन्धनं जातिपदवाच्यं विशेषं व्यवहारतोऽनुभवश्च स्वीकुर्वन्ति । गवाश्वश्वादिष्वपि तिर्यग्जन्तुषु शरीरगतं तददीनामिन्द्रियादिगतं च विशेषं लौकिका अपि केवलभूतवादिनः अङ्गीकुर्वन्ति । तादृशोत्तमजात्युत्पत्तये च सर्वत्र प्रयतन्ते । साङ्कर्यं च परिहरन्ति । किं बहुना व्रीह्यादिबीजानामप्यतिशयविशेषमालक्ष्य पामरा अपि कर्षकाः परीक्षां कुर्वन्ति । एवं सर्वसंमते सर्वानुभवसिद्धे जातिभेदे अपह्नवं साङ्कर्यं वा प्रेक्षमाणाः ईश्वरेणाप्यसाध्यं वस्तुस्वभावविपर्यासं कर्तुकामाः इत्युपेक्षणीया एव महात्मनमेरिति ॥

मनुष्यत्वेन जातीनां तारतम्यापवादकः ।
स्त्रीत्वेन स तु सर्वासामेकतामनुमन्यताम् ॥
सर्वस्याप्यदनार्हत्वात् भक्ष्याभक्ष्यविवेचनाम् ।
परित्यजतु मूढोऽयमिति नास्मादृशां वचः ॥
ननु कोलाहलेनैवमियता किं भवेदिह ।
सर्वा व्यवस्था रागोत्थाः न हि भूतहितोद्यताः ॥
इत्यादिवचनं विश्ववृत्त्यज्ञानविजृम्भितम् ।
सर्वं शास्त्रमदृष्टार्थमिति श्राद्धाजडं वचः ॥
दृष्टार्थत्वे संभवति नादृष्टार्थत्वमिष्यते ।
अशुचित्वं बहुविधं प्रत्यक्षं सर्वसंमतम् ॥
ननु च ब्रह्ममूलत्वात्सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मात्मकत्वात्सर्वस्य सर्वं सममिदं जगत् ॥
इत्युच्चीर्णवचोजालैः स्वतन्त्रैः तुण्डपिण्डितैः ।
लोकोत्तरैषा विश्वेषां विदिता वीतरागता ॥

गङ्गादितीर्थेषु वसन्ति मत्स्याः
देवालये पक्षिसंघाश्च नित्यम् ।
ते ज्ञानहीना न फलं लभन्ते
तीर्थानि देवायतनानि भावाः ॥ इति ॥

आहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥

इति प्रागेव निर्विण्णो महर्षिः कृष्णद्वैपायनः—

इत्थमस्पृश्यशास्त्रार्थः ग्रन्थैरेव प्रकाशितः ।
लक्ष्मीपुरं श्रीनिवास समदृष्टि महोदयः ॥

---

# अस्पृश्यशास्त्रार्थविषयाः

॥ श्री ॥

**श्रीमदाङ्गिरससंवत्सरफाल्गुनकृष्णाष्टमीरविदिवसादितो दिनत्रयं (19-3-1933—21-3-1933) शिवमोग्गनगरे प्रवर्तिताय "अखिलकर्णाटक ज्यौतिषिकसम्मेलन" नामायास्सभाया अध्यक्षस्य श्रीमहिशूरमहाराजसंस्कृतसरस्वतीप्रासादमहापाठशालायां ज्योतिश्शास्त्रप्रधानोपाध्यायस्य संस्थानमहाविदुषः करूरु शेषाचार्यस्य भाषणम् ॥**

---

वेदविलोचनमवनौ त्रिस्कन्धं ज्यौतिषं हि यदुपज्ञम् ।
स जयति मरीचिमाली लक्ष्मीधाम्नो निकेतनं भगवान् ॥

गङ्गासूर्यसुताविरिञ्चिवनितारूपैस्त्रिभिर्भासुरः
स्कन्धैरस्तसमागमोदयरणक्रान्त्यक्षभाघूर्मिभिः ।
सान्द्रस्तन्त्रसुयुक्तियन्त्रनिकरग्राहैर्वृतस्सत्क्रिया
कालानर्घमणिश्चिरं विजयतां स ज्यौतिषाम्भोनिधिः ॥

ब्रह्मेज्यात्रिवसिष्ठकश्यपमनुव्यासार्कसोमादिभिः
सिद्धान्तेषु कृतेष्वभीप्सिततमान् दृक्प्रत्ययेऽतिश्लथान् ।
संशोध्य स्फुटयन्त्रकैस्स्वरचितैर्ग्रन्थैर्जगद्भावुकं
तन्वाना मिहिरार्यजिष्णुजमुखास्सन्तः प्रसीदन्तु नः ॥

आर्याः सभास्ताराः, साम्प्रतमत्र समवेतायां सद्भिः कार्तान्तिकप्रवरैर्गणितार्णवपारीणैर्महामतिभिर्धार्मिकैः प्रजाहितैकचिन्तकैर्नयपथानुगैरधिकारिभिश्च परिमण्डितायामस्यां समज्यायां—

धुरमेकाकिना न्यस्तामृषभेण बलीयसा ।
किशोरीव गुरुं भारं नवोढुमहमुत्सहे ॥

इत्युर्द्धारितां दशामापन्नो दुर्भरमाध्यक्ष्यभरं वोढुमशक्नुवानोऽपि भवतामकैतवसौहार्दबलेन सन्धुक्षितोत्साहभरस्तादध्यक्ष्यौपयिकं किमपि चापलाद्वक्तुमभ्युद्यतोऽस्मि । ततो गुणदोषसंश्लिष्टे च मद्वचसि "हंसो यथा क्षीरमिवाम्बुमिश्रम्" इति नीतिमनुरुध्य दोषानुपेक्ष्य गुणमेकमेव परिगृह्य मयि प्रसीदन्तु भवन्त इति सविनयमभ्यर्थये ॥

निश्चप्रचमेवैतत् यद्भुवनेऽत्र धर्ममेकमेव महीयसामेनसां निवारकं रागादिमलीमसस्य मनसः प्रसादकं गरीयसां श्रेयसां सम्पादकं निश्श्रेयसाऽद्वारकसाधकभगवदुपासनाया निष्पादकं बहुजनबहुविधबहुमतीनामुत्पादकं चेति ॥

तथा च श्रूयते—

"धर्मो विश्वस्य जगतः प्रतिष्ठा । लोके धर्मिष्ठं प्रजा उपसर्पन्ति । धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्ति ॥

क्रियावानेष ब्रह्मविदां वरिष्ठः ।" इति ॥

धर्मस्तावत्कर्म निगमचोदितमलौकिकश्रेयस्साधनं ज्योतिष्टोमादिकम् । तच्च कालैकनिबन्धनम् । कालश्च द्विविधः मूर्तोऽमूर्तश्चेति । तत्राद्यः प्राणविनाडिकानाडिकादिवसादिः स्थूलो गणितगम्यः । द्वितीयः त्रुट्यादिः सूक्ष्मो योगिगम्यः । प्रशस्तेन्द्रियपुरुषस्य श्वासोच्छ्वासान्तवर्ती कालः प्राणः । लोचननिमीलनोन्मीलनकालत्रिंशांशभूततत्परशतांशस्त्रुटिरिति च तयोर्लक्षणं वेद्यम् । कालस्तु भास्करादीनामूर्ध्वाधरप्राच्यपरयाम्योत्तराभिर्गतिभिरवगम्यः । ताश्च ज्योतिश्शास्त्रैकसमधिगम्याः । तच्च शास्त्रं वेदमूलकमस्मादृशां मन्दधियां सुखावबोधाय ब्रह्मरविवसिष्ठादिभिः परमदयालुभिर्मुनिप्रकाण्डैरार्यभटवराहमिहिरब्रह्मगुप्तादिभिः प्रगल्भगणकैश्च स्वसिद्धान्तमुखेन बहुधा प्रवर्तितं ब्रह्मणश्शापा-

द्रोमकनगरे यवनजातीयेन भगवता भास्करेण यवनेभ्यस्समुपदिष्टतया तरिप प्रख्यापितं भूतिकामैर्भूपतिभिरास्तिकैराढ्यतमैश्च दत्तकरावलम्बं च भारतभूतले महतीं प्रसिद्धिमधिगतम्। इदं च गणितजातकसंहिताभिधै-स्त्रिभिःस्कन्धैरधिष्ठितम्। तत्रादौ तावदस्य वेदमूलकत्वं किञ्चित्प्रस्तूयते। तथा च श्रुतयः—

"आकाशे पृथिवी प्रतिष्ठिता।
उत्ताना हवै देवगवा वहन्ति।
पृथिवी विश्वस्य धारिणी।
सप्तभिर्वातैरुदीरिताः।
हिरण्ययेन सवितारथेनादेवो याति भुवना विपश्यन्।
तस्मादादित्यष्षण्मासो दक्षिणेनैति षडुत्तरेण।
नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयात् यदुपे-
यान्निरिन्द्रियस्स्यात्।
चन्द्र इव राहोर्मुखात्प्रमुच्य।
स्वर्भानुरासुरस्सूर्यं तमसाऽविध्यत्।"

इति। एवमादीनां श्रुतीनां ज्योतिस्तन्त्रसम्बद्धो निगूढाशयो ब्रह्मरवि-मुखैर्विवृतो लल्लवराहमिहिरादिभिस्तु परपक्षप्रतिक्षेपपूर्वकं सिद्धान्तितश्च दृश्यते॥

यथा वा—इयं पृथिवी निराधारा निश्चला चाकाशे तिष्ठति। यदीयं भूः सलिले शयिता तदा कथं वा विलयो न भवेन्मृद्रूपाया स्तस्याः। कथं वा गगनवदम्बुदिगन्तरविसृत्वरं न लक्ष्येत। यतोऽ-म्भसि गुरुशिलाप्रक्षेपादूर्ध्वं तस्योत्पतनं लोके दृष्टम्। यदि भुवो दिक्करिभूधरशेषादयो धारकास्तर्हि तेषां नियमेन धारकान्तरपरम्परा-समाश्रयणादनवस्था स्यात्। किञ्च भुवस्साधारत्वे तस्यास्समन्तादूर्ध्वा-

धरभावेन प्रत्यहं परिभ्रमतो भचक्रस्याधारे स्खलनाक्रमणं नोपपद्येत । अतो भूर्वियति ब्रह्मणश्शक्त्यैव तिष्ठतीति श्रीसूर्यदेवः। भूमेपञ्जरान्तराले तदाकर्षणबलादयस्कान्तान्तस्थो लोहपिण्ड इवावतिष्ठत इति वराहमिहिरः । भूर्निसर्गतो निश्चलत्वात् स्वशक्त्यैव तिष्ठतीति भास्करादयः। एवञ्च सर्वेषां भुवो निराधारत्वं सम्मतमेव । श्रीमानार्यभटो भूभ्रमणमेवाभिप्रैतीति बहवो मन्यन्ते । तदत्र किञ्चिद्विचार्यते। अत्रेदं शङ्काबीजम् । आर्यभटीये महायुगे रव्यादीनां भगणोक्तिप्रकरणे भुवोऽपि भगणसङ्ख्यायाः १५८२२३७५०० उक्तेः प्रागमनं प्रतीयत इति । अत्रार्यभटीयव्याख्यायां भटदीपिकायां श्रीपरमेश्वरः—" भूमिर्ह्यचलेति प्रसिद्धा तस्याः कथमत्र भ्रमणकथन " मित्याशङ्कमानः " यथा नौस्थः पुरुषोऽनुलोमगतिः स्वाभिमतां पश्चिमां दिशं गच्छन्नचलं वृक्षपर्वतादि वस्तु विलोमगं प्राचीं दिशं गच्छदिव पश्यति तथा भानि नक्षत्राणि लङ्कायां समपश्चिमगानि अचलानि भूमिगतान्यचलवस्तूनि विलोमगानीव प्राचीं दिशं गच्छन्तीव पश्यन्ती " तिमिथ्याज्ञानबोधकम्—

" अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम् ॥ "

इति पद्यं व्याख्यास्यन्—" प्रवहाक्षेपात् पश्चिमाभिमुखं भ्रमतो नक्षत्रमण्डलस्य मिथ्याज्ञानवशाद्भूमेर्भ्रमणं प्रतीयते । तदङ्गीकृत्येह भूमेर्भ्रमणमुक्तम् । वस्तुतस्तु न भूमेर्भ्रमणमस्ति अतो नक्षत्रमण्डलस्य भ्रमणप्रदर्शनपरमत्र भूभ्रमणकथनमिति वेद्यम् " इति ब्रुवाणो भूभ्रमणसङ्ख्या भचक्रभ्रमणसङ्ख्यैवेति प्रतिजानीते । मुहुरयमेव " एवं ताराणां मिथ्याज्ञानवशादुत्पन्नां प्रत्यग्गमनप्रतीतिमङ्गीकृत्य भूमेः प्राग्गतिरभिधीयते । परमार्थतस्तु स्थिरैव भूमिरित्यर्थ" इति द्रढयति। किञ्चासौ गोलदीपिकायां—

" पूर्वाभिमुखं भ्रमति क्षोणी नास्ति भ्रमः खगर्क्षाणाम् ।

इति किल वदन्ति केचिन्नाभिमतं तदपि चार्यभट्टस्य ॥"
इति मुक्तकण्ठं ब्रूते। आचार्य एव "अनुलोमगति" रिति मिथ्याज्ञाननिरूपणानुपदमेव—

"उदयास्तमयनिमित्तं नित्यं प्रवहेन वायुना क्षिप्तः।
लङ्कासमपश्चिमगो भपञ्जरस्सग्रहो भ्रमति ॥"

इत्यनेन उदयास्तमयहेतोः प्रवहानिलेन सग्रहभगोलभ्रमभिधाय —

"भानामधश्शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः।
तेषामधश्च भूमिर्मेधीभूता खमध्यस्था ॥"

इति भग्रहाणामवरोहक्रमेणाधःस्थिता भूर्मेधीव खमध्ये तिष्ठतीति मेधीदृष्टान्तं प्रदर्श्य निगमयति। अत्राह तद्व्याख्याता परमेश्वरः—"मेधी नाम खलमध्ये स्थितो धान्यमर्दकानां बलीवर्दकादीनां बन्धनार्थं स्थापितः स्थूलशङ्कुः। यथा बलीवर्दकमहिषादयस्तं शङ्कुं मध्यं कृत्वा तत्परितो भ्रमन्ति तथा भानि ग्रहाश्च खमध्ये स्थितां भूमिं मध्यं कृत्वा तस्याः परितो भ्रमन्तीत्यर्थः" इति ॥

अयमाशयः यत्र गगनतलमवनिसंसक्तमिव दृश्यते तत्खलु क्षितिजम्। तत् प्रागादिषु चतसृषु दिक्षु भवति। यत्र देशे याम्योत्तरौ ध्रुवौ क्षितिजसंसक्तौ दृश्येते स एव निरक्षदेशः। तत्र भचक्रं जलयन्त्रवत् सदा मस्तकोपरि भ्रमति। रविस्तु विषुवद्दिवसे। साक्षदेशे तु सखगं भवलयं मस्तकोर्ध्वं न भ्रमति। किन्तु तिरश्चीनम्। यत्र सौम्यो ध्रुवो मूर्धोर्ध्वं दृश्यते स किल मेरुः सैव देवभूमिः। तत्र सदा सखेटं भपञ्जरं तैलिकयन्त्रवत् परिभ्रमतीति गोलस्थितिः। खलमध्यगगनमध्ययोः मेधीभूम्योः सग्रहभचक्रबलीवर्दकाद्योश्च परस्परं बिम्बप्रतिबिम्बभावसद्भावात् भूर्न भ्रमति किन्तु स्थिरैवेति स्पष्टमवगम्यते ॥

लोके खलमध्ये धान्यमर्दनावसरे मेध्या भ्रमणं न कुत्रापि दृष्टम्। अपि च आर्यभटशिष्यो लल्लाचार्यो धीवृद्धिदे गोले मिथ्याज्ञानाध्याये भूभ्रमणं बहुधा खण्डयति । यदीदं भूभ्रमणमार्यभटाभिमतं तदा तदन्तेवासी लल्लः कथं वा तच्च दूषयेत् । तस्माद्भूभ्रमणमार्यभटाभिमतमिति वादः सव्याख्यार्यभटीयपूर्वोत्तरग्रन्थानवलोकननिबन्धनः । प्रसङ्गाल्लल्लादिभिरुदितेषु भूभ्रमणदोषेषु समयात्ययभिया द्वित्रा एव निरूप्यन्ते । यदि भूः पूर्वाभिमुखं भ्रमति तर्हि तद्भ्रमणवेगजनितेन प्रत्यग्गतिना समीरणेन नुन्ना मेघाः केतवश्च सदा प्रत्यग्गतयस्स्युः । उड्डीना विहगाश्चलया भुवा साकं कुलायानामग्रे गमनात् कथं वा तानासादयेयुः? धानुष्केण प्रयुज्यमानाश्शराः स्वस्थलाच्चलितं स्थिरं लक्ष्यं कथं विध्येयुः? एतेन "आकाशे पृथिवी प्रतिष्ठिता" इति श्रुतेरर्थः सम्यग्विवृतः । निरक्षदेशाश्चत्वारः । यमकोटिः, लङ्का, रोमकं, सिद्धपुरञ्चेति । भूमध्ये मेरुः तस्मात् प्राच्यां दक्षिणस्यां पश्चिमायामुदीच्यां च यथाक्रमं यमकोटिः, लङ्का, रोमकं, सिद्धपुरञ्चेति चतस्रो नगर्यः कुवृत्तपादान्तरितास्सन्ति । मेरोरधः कुदले याम्यो ध्रुवो वर्तते । मेरौ सुराः तदधः कुमेरावसुराश्च वसन्ति । यथा ते मिथो नीरतीरे छायामनुष्या इवाधश्शिरस्का भवन्ति तथा तत्र वर्तमाना भारवहा देवगवा अप्युत्ताना अधश्शिरस्का भवन्तीति गोलप्रतीतिः । अस्मात् उत्ताना हवै देवगवा वहन्ति इति श्रुतिः भुवो गोलाकारत्वं व्याचष्टे । जम्बूद्वीपस्य क्षाराब्धेश्च सन्धिप्रदेशो हि लङ्का! तस्या याम्य उदीच्यश्च भागो भूर्लोकः भुवर्लोकः इति च कथ्यते ! मेरुरेव स्वर्लोकः । उपर्युपरि वियति महः, जनः, तपः, सत्यमिति सुकृतैकलभ्याश्चत्वारो लोकास्तिष्ठन्ति । भूगर्भस्था विरविरश्मयो गुहारूपाः अतल, वितल, सुतल, तलातल, महातल, रसातल, पातालाभिधाः सप्त लोका विद्योतन्ते । अनेन

"पृथिवी विश्वस्य धारिणी" इति श्रुत्यर्थस्स्मारितः। भूगोलाद्बहिर्द्वादश-योजनान्तरे भूवायुर्नामावहोऽनिलो वाति। तत्रैवाम्बुदविद्युदाद्यमस्ति। षण्णवत्यङ्गुलं पुरुषप्रमाणम्। पुरुषसहस्राष्टकमानं योजनमित्यार्यभटः। षड्भिस्सप्तभिरष्टभिर्वा यवैरेकमङ्गुलमित्यङ्गुलमाने भेदो वर्तते। आवहा-दूर्ध्वं द्वितीयः प्रवहानिलः। स तु सदा प्रत्यग्गतिः। स एव सग्रहं भचक्रं पश्चिमाभिमुखं भ्रामयति। तस्योपर्युपरि क्रमेण उद्वह, संवह, सुवह, परिवह, परावहाह्वया वायव इति सप्त वायुस्कन्धाः। अमुना "सप्तभिर्वातैरुदीरिताः" इति श्रुतेराशयः प्रत्यभिज्ञापितः। यथापसव्यं संभ्रम्यमाणे कुलालचक्रे सव्यं स्वगत्या मन्दं यान्तोपि कीटाः भ्रमण-वेगेन विलोमं तूर्णं व्रजन्त इव लक्ष्यन्ते। न तु सव्यं। तथा विलोमं परिभ्रमतो भगोलस्यान्तर्गतासु स्वस्वकक्षासु पूर्वगत्या शनैर्व्रजन्तोपि रव्यादयो भ्रमणजवेगेन द्रुतं पश्चिमगा एव भान्ति। अमुमर्थं वक्ति भास्करः—

"यान्तो भचक्रे लघु पूर्वगत्या
खेटास्तु तस्यापरशीघ्रगत्या।
कुलालचक्रभ्रमिवामगत्या
यान्तो न कीटा इव भान्ति यान्तः॥"

इति। एतेन "हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्य" न्निति श्रुतिर्व्याख्याता। यस्मिन् वृत्ते रविर्भ्रमन् समाहोरात्रं करोति तदेव विषुवद्वृत्तं निरक्षदेशसनवृत्तं च। यत्र वृत्ते भ्रमंस्तरणिः प्रत्यहं भिन्नभिन्नमहर्मानं तनोति तत्क्रान्तिवृत्तम्। विषुवत्क्रातिवलययोस्सम्पात एव क्रान्तिपात इत्युच्यते। स च सम्पातः प्राच्यां मेषादौ प्रतीच्यां तुलादौ च भवति। स सम्पातो मीनान्ताद्विलोममंशसप्तविंशतिं याव-द्गत्वा ततः परावृत्य स्वस्थानमागच्छति। ततोनुलोममग्रे मेषे सप्त-

विंशतिभागावधिकं गत्वा ततः परावृत्य स्वस्थानमाप्नोति तेनास्य क्रान्तिपातस्याष्टोत्तरशतभागभोगेनैको विलक्षणो भगणः पूर्यते । सप्तविंशतिरंशाः परमायनांशाः । एवं मीनमेषयोरेव तस्य गतिस्सिध्यति । इयमेवान्दोलिकागतिः । विषुवद्दिनेऽयनदिवसे वा त्रिप्रश्नाधिकारोक्तप्रक्रियया "स्वाक्षार्कनतभागाना" मित्यादिना मध्याह्नच्छाययानीतो रविश्छायार्कः । तदात्वे गणितेनागतस्तरणिः करणार्कः । छायार्कात्करणार्के न्यूने सति तदा चक्रं प्राक्चलितं वेद्यम् । तदा धनमयनांशाः उक्तवैपरीत्यऋणमयनांशा इति स्पष्टमुक्तं सूर्यसिद्धान्ते । भास्करस्तु क्रान्तिपातो मीनान्ताद्विलोमं विक्षेपपातवद्भांशान्भुङ्क्त इति मन्यते । अत्रोपलब्धिरेव प्रमाणम् । एवमयनांशैः क्रान्तिपातस्थानमवबुध्य रवेर्याम्या सौम्या च गतिर्ज्ञेया । यथा विषुवद्वृत्तक्रान्तिवृत्तसम्पातादुदीच्यामपमोपचयवशाद्यथाक्रममपसरन् भास्करो मिथुनान्तं याति । तदा याम्यायनसन्धिः चतुर्विंशतिः परमक्रान्त्यंशाः याम्यायनदिनं दिनपरमवृद्धिश्च भवेत् । तस्मात्परावर्तमानो ब्रध्नः क्रान्त्यपचयवशात्क्रमशः कन्यान्तमायाति । तदा याम्यगोलसन्धिः क्रान्तिशून्यता दक्षिणविषुवद्दिनं समदिनमानञ्च स्यात् । तस्मादपमोपचयवशात्क्रमेणापसरन् दिनकरो धनुरन्तं याति । तदा सौम्यायनसन्धिः परमक्रान्तिः सौम्यायनदिनं दिनपरमापचयश्च स्यात् । तस्मात्परावृत्य दिनमणिरपमापचयवशेन क्रमशो मेषादिं याति । तदा सौम्यगोलसन्धिः क्रान्तिशून्यता सौम्यविषुवद्दिनं समदिवसप्रमाणं च जायते । एवं द्युमणेर्याम्योत्तरायणविवेक उक्तः । एतेन "तस्मादादित्यष्षण्मासो दक्षिणेनैति षडुत्तरेण" इति श्रुतिरुपपद्यते । अमा सहवसतश्चन्द्रार्कौ यस्यां तिथौ, सामावास्येति व्युत्पत्त्याऽयमर्थस्सिध्यति । तन्यते विस्तार्यते चन्द्रकलानयेति हि तिथेर्निर्वचनम् । भूगर्भादर्कं चन्द्रं च प्रति

नीतयोस्सूत्रयोरन्तरं द्वादशभागमितम् । प्रतिद्वादशभागमेकैका तिथिर्भवति तिथिः प्रत्यक्षैव—

"अमादि पौर्णमास्यन्ता या एव शशिनः कलाः ।

तिथयस्तास्समाख्याताष्षोडशैव वरानने ॥"

इत्युक्तेः । क्रान्तिवृत्ते विक्षेपवृत्ते च रविश्चन्द्रश्च पूर्वगत्या व्रजतः । तयोश्शशी शीघ्रगत्वात्प्रत्यहमुपचितेन पूर्वापरेण गत्यन्तरेणाग्रतः क्रमशो रवेस्सकाशं याति । एवं गच्छंश्चक्रकलातुल्यमन्तरं यदाऽग्रतो याति तदा परमसन्निकृष्टो रविणा योगमेति । स्वकक्षास्थयोरर्कशशिनोरूर्ध्वाधरसूत्रान्तरावस्थितिरेव हि योगः । तदा पूर्वापरमन्तरं शून्यं भवति । केन्द्रीयं याम्योत्तरमन्तरं तु वर्तत एव । तदा मनुजदृश्ये शशिगोलार्धे रविकिरणानामप्रतिमफलनादिन्दुः कृष्णो भवति । स एव दर्शः । पूर्णः सकलकलापरिपूर्णः माश्चन्द्रोऽस्यां तिथाविति सा पौर्णमासीति निर्वचनम् । दर्शान्ते रविणा युक्तश्शशी प्रत्यहमेधमानेन गत्यन्तरेणाग्रतोगच्छंश्चक्रार्धकलातुल्यमन्तरं यदा प्राप्नोति तदाऽस्य शशीपरमविप्रकृष्टो मिहिरसम्मुखीनस्तस्य प्राच्यां दिशि भवति । तदाऽर्करश्मयस्साकल्येन मनुष्यदृश्ये हिमांशुगोलार्धे पतन्ति । ततस्सुधांशुः परिपूर्णकलो भवति सैव पौर्णमासी । अनेन "नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयात् । यदुपेयान्निरिन्द्रियस्स्यात्" । इति श्रुतिः सञ्चापिता । क्रान्तिवृत्तशशिविक्षेपवृत्तयोर्यत्र सम्पातः स एव विक्षेपपातः चन्द्रपातः राहुरिति च कथ्यते । रहति त्यजति ग्रहमिति हि राहुशब्दनिर्वचनम् । क्रान्तिवृत्ते यत्र प्रदेशे रविर्भ्रमति तस्माद्विपरीतदिशि षड्भान्तरे क्रातिवृत्ते भूभाभ्रमति । रविचन्द्रयोरन्तरे हि भूः । अर्कबिम्बाद्भूर्यतोऽल्पा । ततो भूभा सूच्यग्रो भवति । सा दीर्घतया शशिकक्षामतीत्य दूरतो याति प्रतिपौर्णमास्यन्तमपि भूभा विधुकक्षायां लगति । परन्तु भूभातः शशि-

सूर्ययोर्याम्योत्तरान्तररूपेण शरेणान्तरितश्चन्द्रो वर्तते । यदा शशी विक्षेपपातस्थानस्थो भवति तदा भूमेन्द्रोर्दक्षिणोत्तरमन्तरं शून्यं स्यात् । तदैव तयोरेकत्रावस्थानम् । तदा शीतांशुर्भूभां प्रविशति । तदैव शशिग्रहणं वेद्यम् । पूर्वापरान्तराभावेनावस्थानमर्कशशीनोर्दर्शान्ते सम्भवति । किन्तु तयोर्याम्योत्तरमन्तरमस्ति । यदा तौ सम्पातस्थौ तर्हि दक्षिणोत्तरमन्तरं शून्यं स्यात् । तदाधःस्थो हिमगुरूर्ध्वस्थं तिग्मांशुं जलदवत् पिधत्तइतीदं कालातिक्रमभिया संक्षिप्य कथितम् । एतेन "चन्द्रइव राहोर्मुखात्प्रमुच्य स्वर्भानुरासुरस्सूर्यं तमसाविध्य" दिति च श्रुतिर्व्याख्याता एवं सूक्ष्मेक्षिकया परस्सहस्रं ज्योतिर्विषयाः श्रुतिषु दृश्यन्ते । कालभेदेन ग्रहगतिर्भिद्यतइत्यत्र बहूनि प्रमाणान्युपलभ्यन्ते । तत्र द्वित्राण्येव निरूप्यन्ते—

"तत्रभ्रंशे प्रतिदिनमेवं विज्ञाय धीमता यत्नः ।
कार्यस्तस्मिन् यस्मिन् दृग्गणितैक्यं सदा भवति ॥
उत्सर्पिणी युगार्धं पश्चादपसर्पिणी युगार्धं च ।
मध्ये युगस्य सुषमादावन्ते दुष्षमेन्दूच्चात्" ॥

अतो मध्यगतेर्भेदस्स्यात् । तस्मात्काले काले निरूप्य मध्यमसंस्कारः कार्यः, तेन वृत्तभेदस्स्यात् वृत्तभेदात् स्फुटभेदः स्यात् । अतः काले काले निरूप्य वृत्तसंस्कारः कार्यः ॥

यदा पुनर्महता कालेन महदन्तरं भविष्यति तदा महामतिमन्तोब्रह्मगुप्तादीनां समानधर्माणएवोत्पत्स्यन्ते । ते तदुपलब्ध्यनुसारिणीं गतिमुररीकृत्य शास्त्राणि करिष्यन्ति" इति ॥

कालभेदेन संशोधनीयाः केचनांशाः निरूप्यन्ते । तथाहि । इनोदयद्वयान्तरमेवार्कसावनं दिनम् । तान्येकस्मिन् रव्यब्दे ग्रन्थभेदेनावयवेषु बहुधा दृश्यन्ते ॥

सूर्यसिद्धान्ते—३६५-१५-३१-३१.

आर्यभटीये—३६५-१५-३१-१५.

सिद्धान्तशिरोमणौ—३६५-१५-३०-२२-३०.

ज्योतिर्गणिते—३३५-१५-३२-९-०.

रविवर्षान्तः पातिभिस्सावयवैः सावनदिनैश्चक्रकला लभ्यन्ते तदैकेन दिनेन कियत्यइत्यनुपातेनानीयमाना रविमध्यगतिरपि भिद्यते गणितस्कन्धे सोपपत्तिकस्यैवागमस्य प्रामाण्यमङ्गीकुर्वाणः श्रीभास्करो वेधागतामेव तादृशसावनमितिं साध्वीं मन्यते । प्रत्यहं वेधेन चन्द्रमसः स्फुटगतयो विलोक्याः । यस्मिन् दिने गतिः परमाल्पा दृष्टा तत्र दिने मध्यम एव स्फुटश्चन्द्रो भवति । तदेवोच्चस्थानम् । यत उच्चसमे ग्रहे फलाभावो गतेः परमाल्पत्वं च । एवं चन्द्रोच्चमपिविपर्यस्यति प्रात्याहिक चन्द्रवेधेन दक्षिणविक्षेपे क्षीयमाणे यत्र दिने विक्षेपाभावो दृष्टस्तद्दिनोद्भवो विधुर्भगणाच्छुद्धः पातस्स्यात । सोपि व्यत्यस्यति । प्रतिदिनं रवेर्वेधेन स्फुटगतयो ज्ञातव्याः । यस्मिन् दिने गतेः परमाल्पत्वं तद्दिने यावान् रविस्तावदेव रवेरुच्चं भवति । उच्चोह्याकर्षको भवति । तेन स्वकक्षामण्डले भ्रमन् ग्रहः स्वाभिमुखमाकृष्यते । तेनाकृष्टस्सन् कक्षामण्डले मध्यग्रहादग्रतः पृष्ठतो वा यावतान्तरेण दृश्यते तावत्तस्य फलं मान्दं शैघ्र्यं वा भवति । यन्त्रवेधविधिना यत्परमं मान्दं शैघ्र्यं वा फलं समुपलभ्यते । तस्य ज्याऽन्त्यफलज्या परमफलज्याचेति भण्यते । यदि त्रिज्याव्यासार्धे भांशाः परिधिः तदाऽन्त्यफलज्याव्यासार्धे क इत्यनुपातेन फलं मन्दपरिधयश्शीघ्रपरिधयश्च भवन्ति । सूर्यसिद्धान्तेयुग्मापदान्तेपि मन्दशीघ्रपरिधय उक्ताः । भास्करेण तु समपदान्ते दोर्ज्याया अभावात् कोटिज्यायाः परमत्वाच्च तत्र तादृशपरिधयो नोक्ताः । किन्तु विषमपदान्तीया एव ते परिधयः ॥

## ग्रन्थभेदेन विपर्यस्ताः मन्दशीघ्रपरिधयोंशाद्याः—

### मन्दपरिधयः

| | | सूर्यसिद्धान्ते | शिरोमणौ |
|---|---|---|---|
| चन्द्रस्य | .... | ३१—४० | ३१—३६ |
| कुजस्य | .... | ७५— ० | ७०— ० |
| बुधस्य | .... | ३०— ० | ३८— ० |
| भृगोः | .... | १२— ० | ११— ० |
| शनेः | .... | ४९— ० | ५०— ० |

### शीघ्रपरिधयः

| | | | |
|---|---|---|---|
| कुजस्य | .... | २३२— ० | २४३—४० |
| गुरोः | .... | ७२— ० | ६८— ० |
| भृगोः | .... | २६०— ० | २५८— ० |

## मतभेदेन वार्षिकी विपर्यस्तायनगतिर्विकलाद्या—

| | | | |
|---|---|---|---|
| सूर्यसिद्धान्ते | .... | .... | ५४— ० |
| भास्करमुञ्जालमते | .... | .... | ५९— ९ |
| ग्रहलाघवे | .... | .... | ६०— ० |
| श्रीबापूदेवशास्त्रिमते | | .... | ५८—२७ |
| श्रीरघुनाथाचार्यमते | | .... | ५०—२६ |

### परमक्रान्त्यंशाः

| | | | |
|---|---|---|---|
| प्राचीनमते | .... | .... | २४— ० |
| नव्यमते | .... | .... | २३—२७ |

### परममन्दफलं भागादि

| | | शिरोमणिमते | ज्योतिर्गणितमते |
|---|---|---|---|
| रवेः | .... | २—१०—३१ | १—५५—० |
| चन्द्रस्य | .... | ५— २— ८ | ६—१८—० |

एवमन्येपि परश्शतं परिष्करणीया विषयास्सन्ति। तेषां संशोधनाय प्राच्यानि नव्यानि च सूक्ष्माणि वेधयन्त्राण्यपेक्षितानि। गोलादीनि यन्त्राण्युक्तानि। न हि तैर्विना कालोवगन्तुं शक्यते। यदाऽह श्रीमान् भास्करः—

"दिनगतकालावयवा ज्ञातुमशक्या यतो विना यन्त्रैः।
वक्ष्ये यन्त्राणि ततः स्फुटानि संक्षेपतः कतिचित्" ॥
गालो नाडीवलयं यष्टिश्शङ्कुर्घटी चक्रम्।
चापं तुर्यं फलकं धीरेकं पारमार्थिकं यन्त्रम् ॥

इति। वराहमिहिरादयः प्राञ्चोऽपि विदग्धगणकाः स्वाभिमतान्मुनिसिद्धान्तानवलम्ब्य तान् नलकादियन्त्रसाह्येन संशोध्य तेषु तादात्विकोपलब्ध्यनुगुणानंशांश्च संगृह्य जगतां भव्याय प्रबन्धरत्नान्यकार्षुः। ते तु यदा महता कालेन महदन्तरं भविष्यति तदाग्रे समुत्पत्स्यमानैर्महामतिभिः खिलीभूतं ग्रहगणितं समुद्धरिष्यत इति विश्वस्यास्मासु विन्यस्त निजभरास्तिरोदधिरे। तदस्माकमवश्यमनुष्ठेयमापतितम्। इदञ्च ग्रहगणितं तन्त्रमित्यभिधीयते। तद्दशभेदम्—

| | |
|---|---|
| १. अहर्गणसाधनम्. | ६. ग्रहयुद्धम्. |
| २. मध्यग्रहानयनम्. | ७. ग्रहसमागमः. |
| ३. ग्रहस्पष्टीकरणम्. | ८-९. अस्तमयोदयौ. |
| ४-५. रविशशिग्रहणे. | १०. भग्रहयुतिः. |

लल्लस्त्वष्टभेदमाह—

| | |
|---|---|
| १. मध्यगतिः. | ५. अर्कग्रहणम्. |
| २. स्फुटगतिः. | ६. पौर्णमासीकरणम्. |
| ३. त्रिप्रश्नः (दिग्देशकालावगमप्रश्नः). | ७. चन्द्रोदयः. |
| | ८. संयुतिः. |
| ४. शश्युपरागः. | |

इति।

न यदीदं ग्रहगणितं तदा मुहूर्तः तिथिः नक्षत्रम् ऋतवः अयने एवमादीनि सर्वाण्यप्यज्ञातानि भवेयुः। लौकिको वैदिकश्च। सर्वोऽपि व्यवहारः प्रणष्टः स्यात्। जगदिदमन्धप्रायं भवेत्। एवं बलवदनिष्टापनोदनमुखेन सामयिकं सर्वं व्यवहारमुपजनयन्महते जगतामुपकाराय कल्पते। होरास्कन्धस्तु पुंसां जन्मकाललक्षण, सद्योमरणायुर्दाय, राजयोग, कलत्रलाभ, तद्विपत्तिकाल, सुतोद्भव तत्प्रणाशात्मनिर्याणकालादीनामवबोधनेन बहुधोपकरोति। संहितास्कन्धस्तु मेघगर्भ, तत्स्रावलक्षण, सद्योवर्षलक्षण, सन्ध्याराग, मेघपरीक्षण, रोहिणीस्वात्याषाढीगतचन्द्रफल, दिव्यान्तरिक्षभौमसंज्ञकोत्पातलक्षण, धान्यार्घलक्षण, वृक्षायुर्वेद, वास्तुविद्या भूशोधन, निधिपरीक्षणादि परस्सहस्रफलोपदेशेन जगतीं भृशमानन्दयति। ईदृशजातकसंहिताजीवातुभूतं जगच्चक्षुर्ग्रहगणितमेव प्रयत्नशतैर्गोपनीयं सांप्रतिकोपसर्गेभ्यः। विशेषतोऽत्राधीयतां प्रयत्नो ज्योतिर्विद्भिः। यदि रसातलमग्नप्राच्यसिद्धान्तोद्धरणमपेक्षितं तर्हि प्रथमतोनिरसनीयं शुकपाठवत्सिद्धान्तग्रन्थप्रवचनम्। इदञ्चावश्यकमस्ति सज्जीकृतैरेव यन्त्रैर्यथोपलब्धि समन्वयपूर्वकं सिद्धान्तग्रन्थाध्यापनं जयपुरादिनगरप्रतिष्ठितयन्त्रावलोकनञ्च॥

तस्मात्स्वपक्षसाधनाभिनिवेशविधुरैर्विमत्सरैर्लोकहितैकप्रवणैः परस्परबद्धसौहृदैर्गणकैस्संभूय साधनीये बहुधनव्ययसाध्ये चास्मिन् कर्मणि भूपतीनां धनिकानां च साह्यं नूनमपेक्षणीयमास्ते। साम्प्रतं तत इतः प्रचार्यमाणेषु दृग्गणितपञ्चाङ्गेष्वपि गुरुशुक्रमौढ्यचोदयादिवसभेदः, व्यतिपातवैधृतादिनभेदः तत्प्रवेशनिर्गमकालभेदः संक्रमघटिकाभेदः चारभेदश्च दृश्यत इतीदं विस्मयावहम्। तिथिपत्रभेद एव सर्वान् व्याकुलयति। प्रत्यक्षानुगुणं प्राच्यसिद्धान्तोपादेयांशपरिग्रहपूर्वकं नव्यमतानुवर्तनपुरस्सरं च विरच्यमानं सर्वाभ्युपगतं करणग्रन्थमन्तरा न कदापि प्रशा-

म्यत्ययं व्याकुलभाव इति सर्वेपि जानन्ति । एतदर्थमेवात्र समभिलदेषा परिषत् । नैतावतापि कालेन कर्णाटजनपदे कुत्रापीदृशी गोष्ठी संवृत्ता । भाग्यवशादेषा समुदितेति प्रमोदते मे चेतः । अस्य च निदानमस्मन्महाराजानां करुणारसपरिप्लुतोपाङ्गः । दुस्साधमिदं सभाकर्म निरन्तरायं निर्वर्ततामिति भगवन्तमभ्यर्थयामः । अस्यास्सभाया विषये श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य श्री लक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालसंयमीन्द्राः परममनुग्रहमादधाना ज्योतिश्शास्त्रे महीयसीं स्वीयां ममतामभिव्यञ्जयन्ति । श्रीपरमहंसपरिव्राजकाचार्य जगद्गुरु श्री चन्द्रशेखरभारतीस्वामिनां प्रोत्साहनमपि भूयसेऽभ्युच्चयाय कल्पते । एतत्सभानिमित्तं श्रीमत्कर्णाटजनपदपरमभागधेय रत्नसिंहासनाधीश्वरैः श्रीकृष्णसार्वभौमैः प्रदर्शितं परममिदमौदार्यमग्रेप्येवमेव जनपदेऽत्र समुत्पत्स्यमानानां ज्योतिस्तन्त्रसमितीनां मार्गप्रदर्शकमित्यवधारयामः । अमीषां नृपमणीनां निगमोदितामायुःश्रियमव्याहतां राज्यश्रियमनुपमामनामयसंपत्तिं चानुगृह्णातु भगवान् सहस्रकिरण इत्याशास्महे । किंच स्वागतसमित्यध्यक्षाणां, कुक्के श्रीसुब्रह्मण्यशास्त्रिविद्वद्वराणां हृद्योपन्यसनशैली नियमेन ज्योतिस्तन्त्रस्य सर्वाभ्यसनीयतां समर्थयते । खिलीभूतज्योतिश्शास्त्रसमुद्धरणमेव परमं पुमर्थं मन्वानानामनवरततदेकचिन्तनातन्तुसन्तानसन्दानितांतःकरणानां गौरवकार्यदर्शिनां ज्योतिश्शास्त्रविशारदानां श्री लिङ्गदैवज्ञानां श्रीगुरुमूर्तिशास्त्रिप्रवराणां श्रीरङ्गज्यौतिषिकाणां च संविधानचातुरी भृशमानन्दनीया विद्योतते । तेषाममङ्गुरं मङ्गलमाशास्महे । ईदृशकार्यनिर्वहणायाकैतवेन सौहार्देन विदेशेभ्यस्समागतानां गणितपारदृश्वनां ज्योतिर्वित्प्रकाण्डानां व्यतिकरेण भृशमुपकृतास्स्मः । एतत्सभानिमित्तं सा्श्रमातन्वतां महोदयानां सर्वमपिकार्यजालं तृणाय मत्वा नैसर्गिकेन सौहृदेन सभामिमामलङ्कु-

र्वाणानां सामाजिकानामधिकारिणां पौरमहाजनानां च सादरं धन्यवादानुपायनीकुर्मः । तथापीदमस्त्याशंसनीयम् ॥

नानासंपदधिष्ठिते जनपदे ह्यद्येऽत्र नव्यैस्तथा
प्राच्यैरार्यभटादिभिश्च रचितैर्यन्त्रैस्सुसूक्ष्मैर्युताम् ।
शालांकामपि संविधाय महतीं शोच्यां विधून्वन्दशां
प्राच्यज्यौतिषपद्धतेरुपकरोत्वस्मत्प्रभुः कृष्णराट् ॥

स्थूलां खेटगतिं बहोरुपनतां कालादिदानीं वरैः
यन्त्रैर्गोलमुखैर्विशोध्य करणग्रन्थात् तदध्वाश्रितात् ।
पञ्चाङ्गं बहुसम्मतं बुधजनैर्निर्माप्य सन्तोषयन्
सामात्यानुजनन्दनो विजयतां श्रीकृष्णभूभृन्मणिः ॥

इति महिशूरमहीपति वाणीप्रासादपाठशालायाम् ।
ज्योतिस्तन्त्रप्रथमाध्यापक कवि शेषसूरिराचष्टे ॥

---

# आत्मनो महिमा तच्छक्तिश्च

( पूर्वतोऽनुवृत्तम् )

---

नैव त्वेवमेकान्ततो नियममभ्युपगन्तुमीश्महे । किङ्कारणम्? इतरेषाञ्चानुपलब्धेः, नैकस्मिन्नसम्भवात् इतरेतराश्रयेऽपरिच्छेदाच्च । इदमिहाभाणि 'यः किलाध्ययनविधिमनुरुन्धेर्धीते विचारयति निश्चिनोत्यनुतिष्ठति चानुष्ठेयानर्थान्, एवञ्जातीयक एव तत्फलमश्नुवीत यद्यत् फलं तत्तादृशा अनुष्ठिता अर्था जनयन्तीत्यवगच्छेम नानेवं जातीयक इति' तन्न प्रस्मर्तव्यम् । तत उच्यते नैनां सरणिं निषेधानामुपलभामह इति । एवं हि सा स्यात्, 'यः किलाध्यनविधिमनुन्धानोऽधीयानो विचारयन्निश्चिन्वन्निषेध्यमर्थमनुतिष्ठति हिंसानृतादिकं एवञ्जातीयक एवानिष्टं फलमश्नुवीत, यद्यत् निषिद्धं कर्मानुष्ठीयमानं जनयतीत्यवगमितम् नानेवञ्जातीयक' इति । ततश्चानधीत्य निषिद्धमनुतिष्ठन् न प्रत्यवेयादित्यनर्थः प्राप्नोति, अत्यल्पमिदमुच्यते, 'अज्ञात्वा वेदात् निषिद्धमनुष्ठातुरनिष्टं न स्यादिति'! महद्धीदमनिष्टमापतति 'अध्ययनाधिकारी निषेधभागन्नाधीयीत नतरां विचारयेत्, नतमां निषिद्धं वर्जयेत् यत्कारणं योध्ययनपूर्वकं जानीयात् स एव प्रत्यवेयादित्यवगतम्, दुर्हाणा चाध्ययनविचारवतस्तदर्थावगतिः, सा चानर्थकरी निषिद्धमनुष्ठातु' रिति॥ नैवैवमिह शास्त्रमर्यादा ॥

ननु नैवमिहानर्थः प्राप्नोति कथं कृत्वा? तात्पर्यमनुसन्धाय॥ इदमिहानुसन्दध्महे सुखमादेयम् दुःखं हेयम् तदर्थञ्च पूर्वत्र विहितमनुष्ठेयम् परत्र च निषिद्धं हेयम् । अतो यथा अनुष्ठापयन् विधिः प्रवृत्त इति तदध्ययनविचारनिश्चयानुष्ठानवान् फलीति शास्त्रार्थमर्यादा, तथैव वर्जयन्निषेधः प्रवृत्त इति निषेधाध्ययनविचारनिश्चयनिषिद्धवर्जन-

वान् प्रत्यवायपरिहारेण फलीति शास्त्रार्थमर्यादेति । नैवं सति 'अनधीयानो निषिद्धमनुतिष्ठन् न प्रत्यवेयात्' इति उक्तपूर्वो दोषोऽवकाशते 'निषिद्धमनुतिष्ठन् प्रत्यवेयात्' इत्येव निषेधवाक्यार्थः । नात्र निषेधवाक्यानामर्थावगतिरपेक्षितेति ॥

अत्राह—अद्धा नोक्तदोषः दोषान्तरगर्तपातः पुनर्दुरुच्छेदः । प्रकारान्तरेण निषिद्धानर्थानवगत्य वर्जयन् न प्रत्यवायपरिहारेण फलीति भवाननुसन्धत्ते । तस्य भवतोनुसन्धि ज्ञातारोध्ययनरहिताश्चतुराः हिंसानृतादिषु अखण्डितप्रसराः प्रसज्येरन्, यत्कारणं 'प्रकारान्तरेणावगत्य वर्जयन्नपि यदि प्रत्यवेयात्, तर्ह्यनुष्ठाने वर्जने वावश्यम्भावी प्रत्यवायः तदनुष्ठानेनैव भवत्विति प्रतिसन्दधीरन्' । तद्यदि जनानोऽजानानो वा अनुष्ठाता वर्जयिता वा निषिद्धं प्रत्यवेयादेव परिहरेदेव च प्रत्यवायं' इति शिष्टाचारं प्रमाणयितुमिच्छसि, तदातिष्ठस्वाज्ञादृष्टार्थो निषेधभागाधीतिरिति ॥

अवश्यञ्चैवमेवैतत्प्रतिपत्तव्यम् । किं कारणम्? इतरेषाञ्चानुपलब्धेः । न खल्वधीतमात्रमर्थज्ञानार्थमवकल्पते । माणवकोऽधीते सामानि गीत्यात्मकानि स्तोभादीनि च । नास्यैतदध्ययनं प्रवरोऽपि पण्डितानां अर्थज्ञानार्थं समर्थयितुमलमिति ॥

नन्वमार्गः कर्दमेऽपतदिति सन्मार्गोपि पतेत्? यतोऽगतिकेयमंशेऽदृष्टार्थताङ्गीकृतिरिति नान्यत्रापि गतिमति तथात्वापादनं उक्तिसहमिति, तत उच्यते–'नैकस्मिन्नसम्भवात्' इति । इहैकमेव विधिमर्षामहे अन्यथा चास्य नियमयतो वचनव्यक्तिरन्यथा चादृष्टार्थस्य । 'विधायकं वेदमध्ययनेन संस्कुर्यात् । संस्कृतेनार्थज्ञानं सम्पादयेत्' इति पूर्वत्र, 'सामस्तोमादिविशिष्टाध्ययनेनादृष्टं स्वर्गं घृतकुल्यादिकं वा वाक्यशेषप्रमितं फलं भावयेत्' इति परत्र ॥

नैवं पुनर्मीमांसामर्यादा किं कारणम्? इतरेषाञ्चानुपलब्धेः । सन्ति व्रीहीनवहन्ति, आज्यमुत्पुनाति, सोममभिषुणोति, इत्यादौ व्रीह्याज्यसोमादिश्रुतयः लौकिकापूर्वीयसामान्याभिधायिन्यः नैव तूभय-सम्बन्धिनो विषय एते प्रसिध्यन्ति । तत् कस्य हेतोः? वैरूप्यं वचनव्यक्तिभेदेन माभूदित्येव । यर्हीयं व्रीहिश्रुतिर्लौकिकाभिधायिनी, तर्ह्यर्थकर्मावघातः, व्रीहिविशिष्टावघातेनापूर्वं भावयेदिति । यत्कारण-मिमे व्रीहय उपयुक्ता उपयोक्ष्यमाणा वा न भवन्तीति । यर्हि च सापूर्वीयाभिधायिनी ततो गुणकर्म । अवघातेन व्रीहीन् संस्कुर्यादिति । यतस्त उत्तरत्र यागे उपयोज्येरन्निति । नैषा द्वयी विधा वाक्य-मभिनन्दतः सिध्यति । दुष्टश्च वाक्यभेदः । द्विविधादृष्टादिकल्पनात् । इह चापूर्वीयमात्राभिधायिनीति सिद्धान्तः । द्वितीयाश्रुतिर्हि माभञ्जीति॥ एतेन आज्यमुत्पुनाति, सोममभिषुणोतीत्यादिश्रुतयो व्याख्याताः । प्रकृते च यद्यवैरूप्यमवश्यमिच्छसि उक्तदोषांश्च परिजिहीर्षसि आशृणु अदृष्टार्थमेवाध्ययनमिति ॥

ननु दृष्टान्ते गुणकर्मेति दार्ष्टान्तिकमपि तथापद्यते ॥ नापद्येत, अर्थज्ञानार्थता सामस्तोभादीनां न सम्भवतीति यतोऽवोचाम । अतस्त-व्यप्रत्ययेन स्वरसतोऽवगम्यमानकर्मत्वं भङ्क्त्वा लाक्षणिकं करणत्वमङ्गीकुर्व-तोपि मन्दो दोषः । नचात्यन्तासम्भवी तव्यप्रत्ययार्थः, गुरुमुखोच्चारणा-च्चारणरूपाध्ययनक्रियाव्याप्तेः स्वाध्याये सत्त्वात् । तत्किमिव छिन्ननू-भत्रैवर्णिकस्यापि विहितं मनोनिग्रहमनुतिष्ठतो वेदोत्थज्ञानाभावे ॥ इति ॥

अत्रोच्यते—नादृष्टार्थं सर्वमध्ययतं । नतरां विधिवैरूप्यम् नतमाञ्चाखण्डितप्रसराः प्रसज्येरन् । किङ्कारणम्? प्रकारमन्यमाश्रयाम इति । "सर्वापि सा विधा निषेधवाक्यार्थावगमिका प्रत्यवायं जनयति याध्ययनपूर्वकविचारादतिरिच्यते" इति । अतोऽध्ययनपूर्वकमजानन्न-

न्यथा जानन्वा निषिद्धं वर्जयिता प्रत्यवायं परिहरेदेव, इति न सा द्वयी दुष्टिः, यैतद्वैपरीत्येन दर्शिता। नतरां नियमात् प्रच्युतिः। नतमाञ्च विधिनिषेधवाक्यार्थयोर्वैरूप्यमितिचेत्—हन्त, स्यान्न सा द्वयी दुष्टिः। स्यात्तराञ्च नियमादप्रच्युतिः स्यात्तमाञ्चावैरूप्यम्। यदीयं विधा विधिभागेष्वपि प्रथेत "अध्ययनाद्यतीत्य प्रकारान्तरेण विधिवाक्यार्थं जानन् प्रत्यवेया"दिति या निषेधवाक्येषु आयुष्मताभाणि। नैव त्वेवमायुष्मानभिसन्धत्ते ॥

नन्वित्थमेव नियमं विधिभागेष्वप्यासञ्जयामः किमतो यद्येवम्? एतदतो भवति यत् भवतो मां प्रति परमसाखित्वमिति कथम्? योग्यं कर्म वैदिकं अत्रैवर्णिकोऽपि प्रयोक्तुमीष्टे इति, कर्मज्ञानञ्चावेदमूलकमपि न दुष्यतीति, च मनो वशीकर्तुमत्रैवर्णिकोप्यधिकरोतीति नो मतम्। विहितार्थानुष्ठाने च वेदमूलकं ज्ञानं नापेक्षेमहि इति वो मतम्, यत्कारणं "निषिद्धानुष्ठानेन प्रत्यवायप्राप्तौ वा तद्वर्जनेन प्रत्यवायपरिहारे वा अध्ययनपूर्वकं ज्ञानं नापेक्षितमिति" यथा, तद्वदेव "विहितानुष्ठानेन तत्फलप्राप्तावपि अध्यनपूर्वकं ज्ञानं नापेक्षितम्" इत्यभ्यधायि भवता सत्येवं कतमेन पुनरंशेनेदं द्वयं विरुन्धीत। येन भवान् मे प्रतिपक्षितामाश्रयेत। इति, तद्यदीष्टसिद्धिमभिलषसि, त्यजैनमन्तिमं कल्पम् "प्रकारान्तरेण विधेयार्थं जानन् प्रत्यवेयात्" इति॥ आश्रुणु च प्रथमं कल्पं "अध्ययनपूर्वकज्ञानवतामेव विहितानुष्ठानं फलजनकमि"ति ततश्च सिद्धमितरेषां निषेधवाक्यानां अध्ययनविधिनिष्कृष्टार्थवर्णने विधिभागसरणेरनुपलब्धेः न नियमविधिः सम्भवतीति ॥

ननु सर्वथा नियमः सिध्यति "उभयोरपि विधिनिषेधभागयोः प्रकारान्तरेणार्थं जानन् प्रत्यवेयादिति" यमवोचाच ततश्च तज्ज्ञानं

नित्यं सिध्यति, "अनधीयाना व्रात्या भवन्ती"ति वाक्यात् यथाध्ययनम्। अतश्चात्तानुष्ठेयार्थज्ञानान् त्रैवर्णिकान् लब्ध्वा वैदिककर्मविषयो निराकाङ्क्षी भवन्ति, येनुष्ठेयार्थज्ञानवन्तमधिकारिणमाकाङ्क्षान्ति, न तु तत्तत्फलेप्सुं सर्वमपि ज्ञानमस्याक्षिप्य अधिकारीकुर्वन्ति। किङ्कारणम्? इतरेषाञ्चानुपलब्धेः. सन्तीह त्रेताग्निसाध्याः क्रतवः, नैतान् विदधद्भिः विधिभिः फलेप्सुं सर्वमपि अग्नीन् त्रेताख्यानाक्षिप्याग्निमन्तं कृत्वा तस्याप्यधिकारित्वेन ग्रहणमुपलभामहे, नित्यविधिसिद्धाधानादिना त्रैवर्णिका अग्निमन्तो लब्धा इति, ये हि विधयो गौरवमेवं परिहरन्ति। नैवं सति मनोनिग्रहे त्रैवर्णिकभिन्नोऽधिकुर्यादितिचेत्॥

नैकस्मिन्नसम्भवात्। यद्येकान्ततो विधिर्ज्ञानमाक्षिप्य नाधिकारिणं गृह्णीयात्, तर्हि कौथुमादिशाखामात्राधीतं कर्मानुष्ठातुं काठको नाधिकुर्यात्, तच्छाखाध्यायिपुरुषेण ज्ञानवता निराकाङ्क्षमिति, यदीह काठकमपि ज्ञानमाक्षिप्याधिकारीकुर्यात्, अत्रैवर्णिकमप्यन्यत्र ज्ञानमाक्षिप्य अधिकारी कुर्यादिति कुतो नो। न खल्वेकस्मिन्नेव वेदे एवञ्जातीयकं वैचित्र्यं सम्भवति इति॥

ननु तत्तत्कर्मानुगुणं वैचित्र्यमस्त्येवेति चेत् नैकस्मिन्नसंभवात्, इह हि स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरेकः न तु तत्तत्कर्मविधिवत् विभिन्नः, सोसावेक एव सन् अध्येतव्ये विधिभागोऽन्यविधः निषेधभागे चापरविध अनधीतकर्मविषये चाव्यापारः इति वदन् कथमिव उपादेयवचनो भवेन्मीमांसकानाम्? अथ यद्यवैरूप्यमिच्छासि तर्हि शृणु "नित्यविधिसिद्धज्ञानवान् विहितेऽधिकारीव निषिद्धेऽपी" ति, तदुक्तदोषम्। उक्तश्चात्र कल्पे दोष इति न पिष्टं पुनरपिपिंष्मः। तद्वश्यं द्व्यपि विधाऽऽस्थेयैव गुणकर्मात्मिकाऽर्थकर्मात्मिका चेति नैवैषैकस्मिन्नध्ययनविधौ सम्भवतीत्युक्तम्॥

अतिरेकाच्च । उक्तश्चातिरेकः काठकस्य कौथुममात्राधीतकर्मानधिकारलक्षणः । ततोऽप्यन्यमतिरेकं पश्यामः, उक्तं सामानि स्तोभादीनि चाधीते माणवक इति । "नैतेषां अर्थं प्रकारान्तरेण जानन् प्रत्यवेयात्" इति नियमः शक्यः सरस्वत्याप्याख्यातुम् इति । तदवश्यमदृष्टार्थत्वे एवञ्जातीयकाध्ययनस्य तदवैरूप्याय सर्वाध्ययनस्याप्यदृष्टार्थतावाद एव श्रेयान् इत्येव युक्तमुत्पश्यामः ॥

अत्रोच्यते नन्वस्त्वदृष्टार्थता सर्वाध्ययनस्य, यदावैरूप्यं सिध्यति, अध्ययनसंस्कृतो वेदोऽर्थज्ञानं लम्भयितुमलमिति तत्र विनियुञ्ज्महे, यथा लवनादिसमर्थो मन्त्रो लवनादौ तद्वारकञ्च त्रैवर्णिकमात्राधिकारिकाणि कर्माणि सिध्यन्तीति चेत् न, इतरेषाञ्चानुपलब्धेः सन्तीहाधानादिसंस्कृता अग्नयः आहवनीयः, दक्षिणाग्निः अन्वाहार्यपचन इति ख्यातिमन्तः । समर्थाश्चैते पाकादिकं निर्वर्तयितुम्, नात्रैतान् विनियुञ्ज्महे किङ्कारणम्? वाचनिको विनियोगो निराकाङ्क्षानकरोदिति, तद्यथा आहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नावन्वाहार्यं पचतीति । सन्ति च सादनप्रोक्षणादिसंस्कृतानि स्फ्यादीनि साधनानि, समर्थानि चामूनि कार्षिकं गार्ह्यं अन्यद्वा किञ्चित् कर्म निर्वर्तयितुम्, नैष्विमानि पात्राणि विनियुञ्ज्महे, किङ्कारणम्? स्फ्येनोद्धन्तीत्यादिर्वाचनिको विनियोगो निराकाङ्क्ष्यकरोदित्येव, इह चाध्ययनसंस्कृतं वेदमेवं वचनं विनियुङ्क्ते—"धन्यं यशस्यमायुष्यं पुण्यं स्वर्गापवर्गदम् । धारणं धर्मशास्त्रस्य वेदानां धारणं तथा" "वेदाभ्यासोन्वहं भक्त्या महायज्ञक्रियास्तथा । नाशयन्त्याशु पापानि देवानामर्चनं तथा" "त्रिभिरनश्नन् पारायणैः पूतो भवति" इति । तस्मात् इतरेषां विनियुक्तविनियोगानुपलब्धेः नायमपि पक्षः शक्यसम्भावनः ॥

अवश्यञ्चैवमेवैतत्प्रतिपत्तव्यम् । किङ्कारणम्? नैकस्मिन्नसम्भवा-

दिति। उक्तं भवता "अध्ययनेन स्वाध्यायं संस्कुर्यात्, संस्कृतेनाध्यायेनार्थज्ञानं सम्पादयेदिति" तन्न, एकस्य विधेर्व्यापारद्वयासम्भवात् नचात्र गत्यन्तरं नास्ति, यावता एकमेव विधिव्यापारं वयमङ्गीकुर्म इत्यवोचाम ॥

ननु नावश्यमेवं प्रतिपत्तव्यम्। कस्य हेतोः? अन्यत्राभिनिवेशात्। न वयं एकस्य विधेः व्यापारद्वयेऽभिनिविशामहे स्वाध्यायविशिष्टेनाध्ययनेनार्थज्ञानं सम्पादयेत्, इत्यत्रैव त्वभिनिविशामहे आर्थिकन्त्वध्ययनकर्मत्वं अनुसन्धाय "स्वाध्यायमध्ययनेन सँस्कुर्यात्" इत्यभ्यधायि तदस्माकमप्येकैव विधेर्व्याप्टतिः न च वाच्यम् स्तोभाद्यध्ययनेर्थज्ञानार्थता दुरुपपादेति, उपलक्षणात् उपलक्षणं ह्यर्थज्ञानपदं "यदेव किञ्चन विध्यन्तरोपयोगि दृष्टार्थत्वेन सम्पादयितुमलं" तस्य सर्वस्य, नैवेदं दृष्टं क्वचिदपि व्यभिचरति गीतेः ऋगक्षरविश्लेषो दृष्टम्, स्तोभानां गीतिकालपरिपूर्तिः दृष्टम्, अननुष्ठेयार्थाभिधायिनां मन्त्राणां प्रयोगप्राशुभावसिद्धिः दृष्टम्, अथवार्थस्मारणं दृष्टम्, इति दिगिति। तथाच "मन्त्रैः स्मारितमर्थवादैः प्रशंसितं नामधेयैः परिच्छिन्नं साङ्गं कर्म प्राशु प्रयुञ्जानोर्थेन युज्यत" इति प्रयोगविधिः पर्यवस्यति। तत्रार्थस्मरणादिना वा प्रयोगप्राशुभावसाधनेन वा सर्वोपि दृष्टमनुबध्नातीति न कोप्यंशो दृष्टात् फलाद्धीयते, तस्मात् येऽर्थज्ञानायालं तत्र तदुद्देशः तज्ज्ञानवन्तश्चाधिकारिण इति नात्रैवर्णिकोऽत्राधिकुर्यात्। एतेन विनियुक्तं पुनर्न विनियुञ्जीतेति दोषः प्रत्युक्तः, यतो नैवमङ्गीकुर्मोत्र कल्प इति ॥

अथवा—नाभाव उपलब्धेः नैवं वक्तव्यम्, विनियुक्तं पुनर्न विनियुञ्जीतेति, विनियुक्तविनियोगाभावं नाचक्षीथाः, किङ्कारणम्? उपलब्धेः यतो विनियुक्तमेव पुनर्विनियुज्यमानमुपलभामहे। ज्योतिष्टोमीयस्तोत्रावान्तरप्रकरणे आम्नायते आग्नेयी ऋक्—

"अग्न आयाहि वीतये"

इत्यादिका, सैषा स्तोत्रे विनियुक्तेति निराकाङ्क्षा आग्नेय्याग्नीध्रमुपतिष्ठत इत्युपस्थानं विहितम् तत्रेमामेवाग्नेयीं विनियुञ्जते नयविदः, "अधिकारे च मन्त्रविधिरिति" तार्तीयेऽधिकरणे इति चेत् न नाभाव उपलब्धेः, अन्यत्राभिनिवेशात्, वैधर्म्यात्तु नाग्नेय्यादिवत्, न वयमेकान्तेन विनियुक्तस्य पुनर्विनियोगाभावं वदामः "कुशा दर्व्यादयो देवा ब्राह्मणाश्च बहुश्रुताः। न ते निर्माल्यतां यान्ति वियोक्तव्याः पुन पुनः" इत्यादीनि विनियुक्तविनियोजकानि प्रमाणानि बहुलमुपलभामहे यतः। किमिव हि वचनं न कुर्यात्? नास्ति वचनस्यातिभारः। यत्र तु प्रमाणं नोपलभामहे तत्र विनियुक्तं स्वमनीषिकया न विनियुञ्जीतेत्यत्रैवाभिनिविशामहे। यत्तु आग्नेयी उपन्यस्ता, विषमः उपन्यासः आग्नेयी ज्योतिष्टोमं प्रकृत्याम्नाता ततस्तदपूर्वसम्बन्धिन्या भाव्यमित्यवगतम्। अस्ति चास्याः स्तोत्रे विनियोजकं वचनम्, अस्ति चोपस्थाने विनियोजकम्। न वयमिदं विद्मः, अत्रैवैषा विनियोज्या नान्यत्रेति। अविशेषात्तूभयत्रेति मन्यामहे यासावस्या अपूर्वसाधनत्वागतिः सैषा स्तोत्रमुपस्थानञ्च द्वारीकृत्येति प्रतीमः न चास्त्यत्र स्तोत्रसम्बन्धावमर्शी विनियोगः "स्तोत्रीयया आग्नेय्या" इत्येवञ्जातीयकः, येन तत्र विनियुक्तस्यैवात्रापि विनियोग इत्याशङ्क्येत, यथा पुरोडाशकपालेन तुषानुपवपतीत्यादौ॥

अवश्यञ्चैवमेवैतत् प्रतिपत्तव्यम्, यत्कारणं विधिर्लाघवमुपधावति इति। इह ह्युपस्थानस्वरूपार्थत्वे ऋङ्नियमो व्यर्थः, अनियमेपि सम्भवात्। यदि स सार्थकयितव्यः ततोऽपूर्वसाधनीभूतोपस्थानार्थत्वं तस्याकामेनाप्यभ्युपगन्तव्यम्। ननु मन्त्रविशिष्टमुपस्थानमाग्नीध्रमण्टपसंस्कारकं विधीयते, न मन्त्रः, सत्यम्, विशिष्टस्य विधाने विशेषणस्य विधानमार्थिकमिति तत्र विचारः। अथवोपस्थानमर्थात् सिध्यति। तथाहि आग्नेय्येति तृतीयाया मन्त्र इह करणमवगतः। स चाभिधानव्या-

पारस्वभावो न स्वभावमतिक्रमितुमीष्टे । अवगमितश्चायं व्यापारः आत्मनेपदेन 'उपान्मन्त्रकरण' इति विहितेन । अस्ति चात्र मन्त्रे आमन्त्रणविभक्तिः । अतश्च समीपस्थितिराक्षिप्यते । तदयं निर्गलितोऽर्थः 'आग्नीध्रमण्टपसमीपे स्थित्वा आग्नीध्रं मन्त्रेणाभिदध्या'दिति । एवञ्चापूर्वसाधनीभूताग्नीध्रार्थत्वेऽर्थादपूर्वार्थत्वं सिध्यति । तद्यदि अपूर्वसम्बन्धः प्रमाणान्तरेण सिध्यति, नार्थिकतद्विधानायास्य विधेस्तात्पर्यं वक्तव्यम् । अथ न, तर्हि वक्तव्यम् । अतश्च गौरवम् । अप्रकरणाम्नातं गृह्णतश्चैतदापतति न प्रकरणाम्नातम् । तदिह लाघवैकरसिको विधिर्न अप्रकृतस्य स्मरतीति नाप्रकृतग्रहणमवकल्पते । नैव तु प्रकृते अनुष्ठेयार्थज्ञाने एवञ्जातीयकं लाघवमुपलभामहे, नतरां प्रमाणमेतदनुगुणम्, नतमाञ्च विहितकर्मानुष्ठानानुपपत्तिः, अनियतमुपायमनुष्ठातारो गृह्णन्तीति । तस्माद्वैषम्यात् नभावोनुपलब्धेरित्येव साधीयः । असति प्रमाणे विनियुक्तविनियोगस्य न भावः, आहवनीयादिष्वनुपलब्धेरिति नो मतं प्रशस्ततरम् ॥

ननु निरस्तोयं पक्षः भवदुक्तमेवानुसन्धाय, यतोऽवोचाम 'स्वाध्यायविशिष्टेनाध्ययनेनेति' इदमपि दुष्टम्, कर्मत्वाभिधानस्तव्यप्रत्ययः करणत्वलक्षक आपद्येतेति । ननु भवानप्येवमाह 'स्वाध्यायविशिष्टेनाध्ययनेन अदृष्टं स्वर्गादिकं वा भावयेदिति" सत्यम्, तत्तु विनियोगगत्या न तु वाक्यार्थगत्या । वाक्यार्थस्तु अध्ययनेन स्वाध्यायं प्राप्नुयादिति । आप्तं च स्वाध्यायं तत्तत्फले विनियुञ्जन्ति वचनानि, तदिदमप्यनुरुन्ध्महे "यतोऽवोचाम स्वाध्यायविशिष्टेनाध्ययनेन तत्तत्फलं प्राप्नुयादिति । उपपद्यते च" "अध्येतव्य" इति तव्यः प्राप्यकर्मा, अक्षरावाप्तिश्चेह स्फुटमवगम्यते सैषा स्तोभाद्यध्यनेपि व्यापिनी, तैरपीयमभ्युपगमनीया येऽर्थज्ञानार्थतामाचक्षते यार्थज्ञानार्थतामेषां निर्वा-

हयति, ततश्चार्थज्ञानात् प्राग्भाविनीति शीघ्रं प्रतीता, तामेनामत्येतु न्नास्ति प्रमाणम् ततश्चात्रोपपत्तिं चतुर्धा जानीमहे ॥

अवश्यञ्चैवमेवैतत् प्रतिपत्तव्यम् किङ्कारणम्? इतरेतराश्रयेन्यतोऽपरिच्छेदात्, उक्तम्भवता "अर्थज्ञानं यस्य सम्भवि अधीतवेदभागस्य तत्र तज्ज्ञानमधिकारितामवच्छिनत्तीति, तदेतदेकान्तेनाभ्युपगच्छतामन्योन्याश्रयदोषादप्रच्युतिः, अधीतिः सन्ध्योपास्तिः अन्यानि च नित्यानि कर्माणि विधीयन्ते, यान्युपनीतमात्रेणानुष्ठेयानि, ततश्चाध्ययनात् पूर्वं प्रकारान्तरमाश्रित्यैव ज्ञातव्यानि, तद्यद्यत्रापि भवन्मतमनुरुन्धीमहि, अध्ययनाद्यनुष्ठानमध्ययनपूर्वके ज्ञाने आयतते, एवञ्जातीयकञ्च ज्ञानमध्ययनाद्यनुष्ठान आयतत इति स्फुटत्यत्रेतरेतराश्रयः, नैवत्वध्ययनविधेः अक्षरावाप्तिभाव्यतामनाश्रयन्तोऽस्माद्दोषान्मुच्येमहि ॥

सर्वधर्मोपपत्तेश्च । सर्वस्य काठकादेरपि कौथुमादिमात्रविहितधर्मानुष्ठानोपपत्तिश्चास्मन्मते सिध्यतीति अयमेव पक्षःश्रेयान् । इतरेषाञ्चानुपलब्धेः निषिद्धानुष्ठाने वा सामस्तोभाद्यध्ययनविषये वा ये दोषाः पक्षान्तरमाश्रयितर्य्यापादिताः नैतेषां मध्ये कमपि दोषमुपलभामहे, यदाक्षरावाप्तिं फलमङ्गीकुर्मः ॥

या पुनर्विन्ध्यन्तरोपयोगि स्वाध्यायाध्ययनेन सम्भावयितुं शक्यं तत्सर्वं तेन भावयेदिति वचनभङ्गी, नैषापि व्यवतिष्ठते किंकारणं? इतरेषाञ्चानुपलब्धेः । वदन्ति बाह्याः "अग्निहोत्रं त्रयो वेदाः त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः" इति पश्यामश्चैवमधीतिनः ख्यातिं लभन्ते फलञ्च धनादिकम् लब्धधनाश्चानुतिष्ठान्ति व्ययीकृत्य धनं विहितानि कर्माणि । तदिहासन्दिग्धं पूर्वेण जीवनार्थत्वं नह्यजीवन्तो धर्ममनुतिष्ठेयुरिति धर्मार्थत्वञ्चाध्ययनस्य, असन्दिग्धं परेण धर्मार्थत्वम् । उपन्यस्यन्ति वेदार्थान् लभन्ते धनम् । प्रश्नन्ति वेदार्थान्

लभन्ते धनम् यक्ष्यन्ति च लब्धधनाः तदसन्दिग्धं पूर्वेण धर्मार्थत्वं परेण च, नैवञ्जातीयकेषु भाव्यतयाभिनिवेशं भवतामुपलभामहे ॥

तत्सामान्यादितरेषु तथात्वम् । तद्यदि क्वचिद्भाव्यतार्हेष्यभिनिवेशो व्यभिचरति, अहेतुरेव भाव्यतार्हन्ती भाव्यतया ग्रहणे इति नयविदो निर्णयन्तीति इतरेषामपि अग्रहणमेव भाव्यतयाऽऽपतति ॥

विप्रतिषेधाच्चासमञ्जसम् । त एते खनन्ति कूपान्, तन्वते च तटाकोद्यानादीनि, पूर्णिकान्या वा बालिका जलमुदञ्चयन्ती पतिता कूपे म्रियते, गावोपि पिबन्त्यः पानीयं पङ्करुद्धा नक्रगृहीता वा म्रियन्ते, वटव उद्याने समिधो दर्भान् कुसुमानि चापचिन्वन्तः कालदष्टाः म्रियन्ते तदसन्दिग्धं पूर्वेण मध्यमेन परेण चाधर्मार्थत्वं अध्ययनस्य, तत्किं विध्यन्तरोपयोगीति अध्ययनप्रभवं फलमङ्गीकुर्मः? उताहो अनर्थकरमिति जहीमः, न वयमिदं जानीमहे कतरः पक्षः श्रेयानिति, धर्मार्थत्वमधर्मार्थत्वञ्चैकस्य विप्रतिषिद्धमिति असमञ्जसमिदं मतमित्येव वक्तुं युक्तमित्युत्पश्यामः ॥

ननु नैवमुद्दिशन्त इमानि तन्वते यथा कस्य चिन्मरणं भवत्विति, तन्नानर्थकरं प्रणालिकयापि तदध्ययनमधीतिनाम्, नैवं सम्भवति किङ्कारणम्? इतरेषाञ्चानुपलब्धेः यदि ह्येकान्तेन तत्तदुद्देशिन एव तत्तत्फलेन युज्येरन्नित्यास्थीयेत अपि तर्हि सर्वत्रास्थातव्यम् अर्थकरे चानर्थकरे च कर्मणि, नैव त्वर्थकराणां कर्मणामिवमास्थातुमवकाशमुपलभामहे इदमिहावधत्स्वायुष्मन्—सुहृत्सम्मितानि पुराणानि ततश्च विचित्रकथाभङ्ग्यार्थवादबहुलया श्रोतृभ्यः प्ररोचयमानानि धर्ममुपदिशन्ति वेदमुपबृंहयन्ति । न तु तत्तत्कथामात्रपर्यवसायीनि, स्फुटितमिदं "श्रावयेच्चतुरो वर्णानिति" वचनार्थविचारप्रघट्टके । तदत्रेदं निदर्शयामः ॥

ब्रह्माण्डपुराणे उत्तरखण्डे षष्ठाध्याये स्तेयनिषेधे "ब्रह्मज्ञस्य दरिद्रस्य कृच्छ्रार्जितधनस्य च। बहुपुत्रकलत्रस्य तेन जीवितुमिच्छतः। तद्द्रव्यस्तेयदोषस्य प्रायश्चित्तं न विद्यते। विश्वस्तद्रव्यहरणं तस्याप्यधिक-मुच्यते। विश्वस्तो वाप्यविश्वस्तो न दरिद्रधनं हरेत्। ततो देवद्विजादीनां हेमरत्नापहारकम्। यो हन्यादविचारेण सोऽश्वमेधफलं लभेत्" इत्यादिना प्रस्तुते कथा भवति वज्रनामैकागारिको निशीथे धनसमृद्धात् ग्रामादनु-दिनं स्तोकशो रिक्थं बहु चोरयित्वारण्येऽवटे प्रक्षिप्य पिधातुमना अश्मानमानिनीषुर्मृगयमाणो दूरमन्यत्रागात्। तदनु किरातः कश्चित् काष्ठविक्रयी काष्ठभारहारकः तन्मार्गपतितः तदवटाद्दशांशमादाय धन-गृध्नवे प्रियाया आजहार प्रमुदितमना वृत्तं कथयन्। सा पुनर्भिक्षुक-ब्राह्मणनिवेदितमात्मनो भाग्यं चिन्तयन्ती धर्मकृत्येष्वेनं पतिं न्ययुङ्क्त, दस्युरश्मना पिधाय यथापुरमन्वतिष्ठत्। तदाह "चिन्तयन्ती ततो वाक्यमिदं भर्तारमब्रवीत्। नित्यं सञ्चरते विप्रो मामकानां गृहेषु यः। मां विलोक्येयमचिरात् बहुभाग्यवती भवेत्। चातुर्वर्ण्यासु नारीषु इयं चेत् राजवल्लभा। किन्तु भिल्ले किराते च शैलूषे चान्त्यजातिजे। न तिष्ठते चिरं लक्ष्मीः शापाद्वल्मीकजन्मनः। तथापि बहुभाग्यानां पुण्यानामपि पात्रिणी। दृष्टपूर्वन्तु तद्वाक्यं न कदाचिद्वृथा भवेत्। अथवात्मप्रयासेन कृच्छ्राद्यल्लभ्यते धनम्। तदेव तिष्ठति धनमन्यद्गच्छति कालतः। स्वयमागतवित्तन्तु धर्मार्थे विनियोजयेत्। कुरुष्व तेन तस्मात्त्वं वापीकूपादिकाः शुभाः" इति ॥

अथ किरातः पूर्वेण ग्रामं बहूदकमक्षयजीवनं तटाकं खनन् असमापितकर्मा रिक्तधनः वेतनाय कर्मकरैः प्रतुद्यमानः तदेवावटिकं धनं कणश आहृत्याविज्ञातश्चौरेण कृत्यं समाप्य सेतुमस्याकरोत्। प्रासादञ्च शार्ङ्गिणो मध्येजलमकरोदन्तरेण च सेतुं शङ्करस्य। अन्यानि

च महान्ति देवतायतनानि गृहादीनि च निर्माप्य विप्रसात्कृत्याह— "क वाहं वीरदत्ताख्यः किरातः काष्ठविक्रयी । क वा महासेतुबन्धः क देवालयकल्पना । क वा क्षेत्राणि क्लृप्तानि देवतायतनानि च । कृपयैव कृतं सर्वं भवतां भूसुरोत्तमाः । प्रतिगृह्य भवन्तो मे क्षेत्राण्यायतनानि च । कृतार्थं कुरुत क्षिप्रं मादृशां हि गतिर्द्विजाः" इति । "प्रतिगृह्य तथैवैतद्देवरातमुखा द्विजाः । द्विजवर्मेति नामास्मै तस्यै शीलवतीति च । चक्रुः सन्तुष्टमनसो महात्मानो महौजसः" । अथ स तद्रक्षणार्थी तत्रैवावसत्सकुटुम्बकः । ततः कालधर्मं गते द्विजवर्माणि सकलत्रे यमब्रह्मविष्णुरुद्रदूता एनमानिनीषवो देवासुरवद्युध्यन्तेतरेतरम्॥

अत्रान्तरे नारद आगत्याह—"मा कुर्वन्तु मिथो युद्धं श्रृण्वन्तु वचनं मम । अयं किरातश्चौरेण सेतुबन्धं पुराकरोत् । वायुभूतश्चरेदेको यावत् द्रव्यवतो मृतिः । स बहुभ्योहरद्द्रव्यं तेषां यावत्तथा मृतिः" इति । "गतेष्वखिलदूतेषु श्रुत्वा नारदभाषितम् । चचार द्वादशाब्दं तु वायुभूतोन्तरिक्षगः" इति तदनु कलहशान्तिः । भार्यायै चास्यादोषायै ब्रह्मलोकगतिमुपादिशन्नारदः । सा पुनः पतिदेवता निर्वेदमापन्नाह—पत्युरेव मे गतिर्भवेन्नान्येति, अथवास्य निष्कृतिम्मे ब्रूहीति । तुष्टस्स भोगशरीरं पतिकर्मकरं शरीरं च भगवत्त्वात्प्रदायाह परिहारमस्यै "निराहारो महातीर्थे स्नात्वा नित्यं हि साम्बकम् । पूजयित्वा शिवं भक्त्या भस्मोद्धूलितविग्रहः । ध्यात्वा हृदि महेशानं शतरुद्रमनुं जपेत् । ब्रह्महा मुच्यते पापैरष्टोत्तरसहस्रतः । पापैरन्यैश्च सकलैर्मुच्यते नात्र संशयः । इत्यादिश्य ददौ तस्य रुद्राध्यायं तपोधनः । अनुगृह्येति तान्नारीं तत्रैवान्तरधीयत" इति तदन्वन्तरधात् । अथ सा तथैवान्वतिष्ठत् । द्विजवर्मा च किरात एतन्महिम्ना पूर्वशरीरमाप्नोत् । अथ वज्रनामा चौरोन्ये च ग्रामीणा धनिकाः कालधर्ममुपगताः । अथ च

यम आगत्यैनानन्वशात् 'भवद्भिस्तु कृतं पापं दैवात्सुकृतमप्यभूत् । किमिच्छथ फलं भोक्तुं दुष्कृतस्य शुभस्य वा । इति तस्य वचश्श्रुत्वा प्रोचुर्वज्रादिकास्ततः । सुकृतस्य फलं त्वादौ पश्चात्पापस्य भुज्यते । पुनराह यमो यूयं पुत्रमित्रकलत्रकैः । एतस्यैव बलात्सर्वे त्रिदिवं गच्छत द्रुतम् । तेधिरुह्य विमानानि द्विजवर्माणमाश्रिताः । यथोचितफलोपेताः त्रिदिवं जग्मुरञ्जसा । द्विजवर्माखिलान् लोकानतीत्य प्रमदासखः । गाणपत्यमनुप्राप्य कैलासेद्यापि मोदते । (तदन्विन्द्रोपृच्छत्) तारतम्य-विभागञ्च कथयस्व महामते । सेतुबन्धादिकानाञ्च पुण्यानां पुण्यवर्धन । (बृहस्पतिः समाधत्ते) पुण्यस्यार्धफलं प्रापद्विजवर्मा महायशाः । वज्रः प्राप तदर्धं तु तदर्धेन युताः परे । मनो वाक्कायचेष्टाभिश्चतुर्धा क्रियते क्रिया । विनश्येत्तेन तेनैव कृतैस्तत्परिहारकैः' इत्यादिना इति । तस्मात् अर्थकरकर्मवदनर्थकरं कर्मापि अनुद्देशिनः फलं जनयेदेवेति सुष्ठूक्तं विप्रतिषेधाच्चासमञ्जसामिति ॥

स्वपक्षदोषाच्च 'स्वाध्यायाध्ययनेन विध्यन्तरोपयोगि यद्यत् सम्पादयितुं शक्यं तत्सर्वं तेन भावयेत्' इत्येवमङ्गीकुर्वतस्स्वपक्षदोषोपि भवति । अत्रैवर्णिकनिवारणं स्वपक्षः । तत्रावधत्स्वायुस्मन् कश्चिद्धि परमदयालुस्साङ्गं वेदमधीते, करोति धर्मजिज्ञासां, अनुशास्त्यत्रैवर्णिकं अहिंसां सत्यमस्तेयमित्येवञ्जातीयकं वैदिकं धर्मं । तत्किमस्याध्ययनं विध्यन्तरानुपयोगि? यद्युपयोगि, मनोनिग्रहमप्यनुशासतोऽस्याध्ययनस्य तथा न हीयते । तदेवमत्रैवर्णिकस्यापि संप्राप्ततापातः । तदन्व-त्रैवर्णिकस्य निवारणमेव निवारितं भवतीति स्वपक्षासिद्धिरूपो दोष आपतति ॥

किंचान्यत् पृच्छाम्यङ्ग यो यो वेदार्थस्तत्तदर्थानुष्ठाने तत्तदध्ययन-पूर्वकं ज्ञानमधिकारितामवाच्छिनत्ति इति अभिसन्धत्से, उताहो स्वाधी-

तवेदार्थानुष्ठानमात्रे तदध्ययनपूर्वकं ज्ञानमधिकारितामवच्छिनत्तीति ? नोभथापि सम्भवति । किंच कारणं ? स्वपक्षदोषाच्च । आस्तिकम्मन्य प्रमाणीकुरुष्व 'यः कश्चित् कस्य चित् धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः' इति मानवं वचनम् । अङ्गीकुरुष्व च मर्त्यमात्रधर्मांश्चेदं शास्त्रमनुशास्तीति । तथाह्यनुक्रम्यते— 'जगतश्च समुत्पत्तिं संस्कारविधिमेवच । व्रतचर्योपचारं च स्नानस्य च परं विधिम् । दाराधिगमनं चैव विवाहानाञ्च लक्षणम् । महायज्ञविधानञ्च श्राद्धकल्पश्च शाश्वतः ॥ वृत्तीनां लक्षणञ्चैव स्नातकस्य व्रतानि च । भक्ष्याभक्ष्यं च शौचञ्च द्रव्याणां शुद्धिमेव च ॥ स्त्रीधर्मयोगं तापस्यं मोक्षं सन्न्यासमेव च । राज्ञश्च धर्ममखिलं कार्याणां च विनिर्णयम् ॥ साक्षिप्रश्नविधानञ्च धर्मं स्त्रीपुंसयोरपि । विभागधर्मं द्यूतञ्च कण्टकानाञ्च शोधनम् ॥ वैश्यशूद्रोपचारञ्च सङ्कीर्णानाञ्च सम्भवम् । आपद्धर्मञ्च वर्णानां प्रायश्चित्तविधिन्तथा ॥ संसारगमनञ्चैव त्रिविधं कर्मसम्भवम् । निश्रेयसं कर्मणाञ्च गुणदोषपरीक्षणम् ॥ देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान् । पाषण्डगणधर्मांश्च शास्त्रेस्मिन्नुक्तवान् मनुः' ॥ इति । तत्किमुपलभेयाः ? 'इयतो धर्माननुशास्ति प्रत्यक्षो वेद' इति । अनुपलभमानस्य च ते कुतस्त्याध्ययनपूर्विका तदर्थसंवित्तिः ? । असंविदानस्य कुतस्तरां तत्पूर्विकानुष्ठानसिद्धिः ? । अनेवमनुनिष्ठतश्च कुतस्तमां ते फलसिद्धिः ? । नैव त्वेवञ्जातीयां शिष्टानाम्मर्य्यादामुपलभामहे । तामेनामतिक्रामन्महासाहसिकोसीति स्वपक्षदोषः ॥

अत्रैवर्णिकधर्मांश्चानुशास्ति मानवं शास्त्रमित्यवोचाम । तन्न प्रस्मर्तव्यम् । तत्र पृच्छाम्यङ्ग किमत्रैवर्णिकोप्यध्ययनपूर्वकमनुतिष्ठन्नेवर्च्छेत्यर्थमिति ? । ओमिति चेत् अद्धा, तदधीती तद्विचारी तदनुष्ठानी चापतति अत्रैवर्णिक इति तं बहिष्कुर्वतस्ते तदसिद्धिरूपः स्वपक्षदोषः ।

नैष दोषः । किङ्कारणं ? तत्कर्तृकमध्ययनं न विहितमिति इति चेत्, हन्त निषादोऽधीयीतेति नैव विहितमिति तस्याप्यनधिकारः प्राप्नोति निषादेष्टाविति स्वपक्षदोषः । यत्कारणं 'एतया निषादस्थपतिं याजयेदि' त्येवञ्जातीयकं शास्त्रमनर्थमापततीति । तद्यदि "स्थपतीष्टिः प्रयोजयेदग्न्याधेयं तादर्थ्याच्चापवृज्येतेति" सूत्रं पारमर्षमनुरुन्त्से, अनुमन्यसे चैतदनुगुणमार्गं विद्याश्चास्य, तदनुरुन्त्स्व "तत्सामान्यादितरेषु तथात्व" मित्यपि पारमर्षं सूत्रं, अनुमन्यस्व चात्रैवर्णिकस्याप्येतदनुगुणमार्गं विद्यां च, ततश्च पुनरपि स्वपक्षदोषः ॥

अथात्रैवर्णिको नाध्ययनपूर्वकज्ञानेनर्च्छत्यर्थम् ? तत्रैवं पृष्टो भवान् व्याचष्टाम्, किमत्र निदानमिति ? अध्ययने नाधिकरोतीति चेत्, साध्वी त्वया दर्शिता व्याप्तिः—"यो यो यद्यदध्ययने नाधिकरोति स स तत्तदनुष्ठेयार्थज्ञानं प्रकारान्तरेण सम्पाद्यानुतिष्ठन्नपि न तत्तत्फलैर्हीयत" इति । स एष एवं वदन् मत्पक्ष एव प्रविशतीति परपक्षप्रवेशरूपः स्वपक्षदोषः ॥

अथ मतम् "स्वाधीतवेदार्थमात्रानुष्ठानेऽधिकारितामवच्छिनत्ति तत्तदध्यनपूर्वकं ज्ञानमिति, तत्रापि भङ्गीमन्यामाश्रयन्नुक्तपूर्वामेव व्याप्तिमाश्रृणोषीति स एव परपक्षप्रवेशरूपः स्वपक्षदोषः । एतेन पौराणिका ऐतिहासिकाश्च चातुर्वर्ण्यधर्मा व्याख्याताः । वेदमूलकान्येव वेदमुपबृंहयन्ति तानि प्रमाणानि यतः । तस्मात् यथायथायमर्थज्ञानार्थतावाद उपपत्तिमत्त्वाय प्रकल्प्यते तथा तथा सिकताकूपवत् विदीर्यत एवेति स्थितमत्रैवर्णिकोपि मनोनिग्रहेधिकरोतीति ॥

अत्रोच्यते—"विरुद्धमिदमाख्यायि, स्वाध्यायविधिना यतः । स्वधेरकत्वसिध्यर्थमधीत्या संस्कृतेन तु । धर्मार्थकाममोक्षा हि ग्राह्या बोध्यास्तथैव च । अधर्मानर्थदुःखाद्या हेया बोध्या इतीरितम् ।

शूद्राद्यर्थं पुराणादिश्रवणं विधिना कृतम् । त्वयादर्शि नयै मेधां स्वाध्यायविधिसाम्यतः । विस्मृत्य सर्वमेतत्त्वं कथमात्थाक्षरासितः । फलवन्तं विधिं सूत्रकिङ्किणीबन्धताण्डविन् । किञ्चान्यत् । शब्देष्वर्थ-परत्वं तद्धित्स्यर्थे निहन्ति यत्नादौ । आर्थी विशिष्टवित्तिः भवतात् मत्वेति सर्वो हि । तत्तद्वाक्यं ब्रूते लोके, वेदेपि तद्वद्धि । व्याप्रतिसाध्यं वाच्यं नर्ते स्वाध्यायविधितोन्या । व्याप्रतिरास्ते सैषा कणशः पिष्टा गजेन सुमपेषम् । तस्मादानर्थक्यं प्रहातुकामेन वेदस्य । विधिरेष एव सेव्यो, नाङ्गीकुर्मोत्र नियमादीन् । भवता स्थातान् किन्तु प्रमाणमा-श्रित्य विमृशामः " इति ॥

सत्यम् । विमृशन्तु भवन्तो, न तु ताण्डविताद्याक्रोशो विचार-शीलिभिरभ्यस्तः पन्थाः । न विरुद्धमाचक्ष्महे, किन्तु, "तदशिष्यं संज्ञाप्रमाणत्वात्" । अर्थज्ञानं न शिष्यमध्ययनविधेः फलत्वेन । किङ्का-रणम् ? संज्ञाप्रमाणत्वात् । वेद इति संज्ञैवार्थज्ञानार्थत्वे प्रमाणं भवति, वेदक इति यतस्तदर्थः । अज्ञातञ्च ज्ञापयन् वेदको न ज्ञातं वदन् । तथाहि गाथा "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेदतेति" । तदिदमनुरुन्धानास्संम्पिण्डित-मवोचामार्थज्ञानार्थत्वम्, नाध्ययनविधिप्रतीक्षया । अथवैवमभिसन्दध्महे । "दर्शयतश्चैवं प्रत्यक्षानुमाने" । "ब्राह्मणेन निष्कारणं षडङ्गो वेदोध्येयो ज्ञेयश्च" इति "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा" इति चैवञ्जातीयका श्रुतिः ज्ञाने वेदं विनियुञ्जन्ती अर्थज्ञानार्थतां दर्शयति ॥

ननु सकलश्रुत्यर्थोवगन्तव्यश्चेत् निश्चीयेन, एषा निर्णीतिः सिध्यति, सिद्धायाञ्चैतस्यां निर्णीतौ, सकलश्रुत्यर्थोवगन्तव्यो निश्चीये-तेति इतरेतराश्रयः । नाश्रयः, यतस्स्मृतिरप्येवं दर्शयति । तथाहि-

सौरपुराणे द्वितीयाध्याये "वेदानुवाच भगवान् देवदेवो महेश्वरः। मत्प्रसादात् भविष्यध्वं हे वेदा लोकपूजिताः॥ युष्मानाश्रित्य विप्राद्याः कर्म कुर्वन्तु नान्यथा। ये युष्मान् समतिक्रम्य यत्किञ्चित् कर्म कुर्वते॥ निष्फलं तत् भवेत् कर्म तेषां युष्मदवज्ञया। नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम्। युष्मद्वचो नान्यादिति मत्वा धीरो न शोचति। ये वै युष्माननादृत्य शास्त्रं कुर्वन्ति मानवाः॥ निरये ते विपच्यन्ते यावदिन्द्राश्चतुर्दश। श्रेयसे त्रिषु लोकेषु न वेदादधिकं परम्। विद्यते नात्र सन्देह इति दत्तो वरो मम', इति चैवञ्जातीयका। नन्वर्थावगमको वेद इति नेयं श्रुतिः शास्ति, किन्तु ज्ञाने विनियोगं, सत्यम्, तत् किमयोग्यो विनियुक्तः? यदि योग्यः सिध्यत्येव नो मनोरथः॥

नन्वध्ययनसंस्कृतो वेदोन्यत्र विनियुक्तः, सत्यम्, ज्ञानेपि विनियुक्तः? संयोगपृथक्त्वात्। 'भोगमात्रसाम्यलिङ्गाच्च'। इह चाध्ययनविधेरक्षरावाप्तिर्वा फलं भवतु अर्थज्ञानं वा, न मात्रयाप्यनुभवे विशेषं पश्यामः, अपितु सर्वत्र साम्यम्, तत्र लिङ्गात्, वेदकत्वरूपात् सामर्थ्यात् अर्थपरत्वं अक्षरावाप्तिवादिनोपि सम्भवतीति। न च मन्यस्व, विनिगमकं नास्ति ततश्च विकल्प आपतीति, किङ्कारणम्? भोगमात्रसाम्यलिङ्गाच्च। अनुभवमात्रे केवलमविशेषोस्तु, न तु वाक्यार्थवर्णनप्रकारे, नियमविधिं हि पक्षी अभिसन्धत्ते, स च परश्शतैर्दूषणैर्निरस्त इति लिङ्गात् अस्मत्पक्ष एव श्रेयान्॥

स्यादेतत्—स्वाध्यायोध्येतव्य इत्येवास्ति, न वेदो ध्येतव्य इति तत्र वेदक इत्यर्थ एतत्प्रतीक्षमाणानां सिध्यति। तद्यद्यवश्यमेवञ्जातीयकार्यसिद्धिमभिलषसि, तर्हि तस्य ते वेदोध्येतव्य इत्येव शिष्यम्, तत्रोच्यते—'तदशिष्यं संज्ञाप्रमाणत्वात्' नैव तत् शिष्यं वेदोध्येतव्य

इति, न च वेदागृहीतिः स्वाध्यायसंज्ञाप्रमाणत्वात्। अधीयते इत्यध्यायो गुरूच्चारणानूच्चारणकर्मभूत इत्यर्थः। स च वेद एवेति। अस्तिचान्यत्रापि वेदको=निवेदक इति बोधके पुरुषे पदसमवाये च प्रयोगः। वेदकश्च वेद इत्युक्तवतः तादृक्पदसमवायगृहीतिशङ्का स्यात्। स मा ग्राहीति वेदमात्रासाधारणं धर्मं तादृगुच्चारणोपलक्षितं पुरस्कृत्याह स्वाध्याय इति। आह च धर्मान् 'तपोविशेषैः विविधैः व्रतैश्च श्रुतिचोदितैः वेदः कृत्स्नोधिगन्तव्यः सरहस्यो द्विजन्मना' इति॥

यत्पुनराख्यायि 'शब्दानामर्थपरता तत्प्रतीत्युद्देश्यके व्यापार आयतते ततश्च वेदे लोक इव तादृगुच्चारणादिकं न सिध्यति, यतो न रागत इमे पदसङ्घाता ग्रथिताः केनापि पुरुषधौरेयेणेति मीमांसामर्यादा, अतोध्ययनविधिरेवोपास्यस्तदर्थमिति'। नैतदेवम्। किङ्कारणम्? 'अनावृत्तिः शब्दात्' शब्दात् अर्थस्य न व्यावृत्तिः, यावदुक्तं भवति शब्दा अर्थपरा इति, तावदुक्तं भवति अनावृत्तिः शब्दादिति। तथा च पारमर्षं सूत्रम्। 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इति, 'सिद्धे शब्दार्थसम्बन्ध' इति च वार्तिकं। ननु शब्दा अर्थपरा इति सत्यम्, ज्योतिष्टोमादिवाक्यं तत्तदर्थविशेषपरमिति कुतस्त्योयं वो विशेषप्रत्ययः? तदाश्रण्वङ्ग अध्ययनविधिं तादृग्विशेषावगत्यै इति। नाश्रृणमः किङ्कारणम्? 'युक्तेः शब्दान्तराच्च'। उक्तमनावृत्तिः शब्दादिति, तत्रैव सूत्रे युज्यमानात् शब्दान्तरादस्याप्यर्थस्य सिद्धेः। इहहि पदे द्वे चकास्तः, अनावृत्तिरिति शब्दादिति च, शब्दान्तरं च युज्यमानं तादृशं द्वयमविशेषात्। ततश्चानावृत्तिः शदात् अनावृत्तिः शब्दात् इति सिद्धम्। एकैकोपि शब्दः न तत्तदर्थेन वियुज्यते, नतरां वाक्यं नाम तादृक्पदसमुदायादतिरिच्यते, ततश्च नतमां वाक्यार्थविशेषप्रत्ययस्य उपायान्तरप्रतीक्षावकाशः, ततश्च सिद्धत्यविशिष्टस्तु वाक्यार्थ इति॥

अथ वा अध्ययनविधिरर्थवित्त्युद्देश्यको व्यापार इति वादिनं प्रति वदामः, 'लुब्योगाप्रख्यानादिति'। वेदसामान्यस्यार्थप्रतीतिसामान्यहेतुत्वमध्ययनविधिमहिम्न्यायततान्नाम, तद्विशेषरूपाणां पदसमुदायानां वाक्यविशेषपदवाच्यानां वाक्यार्थविशेषप्रतीतिहेतुत्वं पुनः कुत्रायतते? इति। वयन्तु पश्यामो न कुत्राप्यायतत इति लुप्=लोपस्तेभ्यो वाक्यार्थविशेषप्रतीतेरापद्येत यतो योगानामवयवानां वेदवाक्यविशेषरूपाणां तत्तद्वाक्यविशेषाध्ययनविधयो न प्रख्यायन्त इति ॥

अथ निर्विशेषं न सामान्यं इति नयमनुरुन्ध्महे तेषान्नः सिध्यत्येव विशेषवाक्यानामपि अर्थपरतावगतिरिति चेत्, न, लुब्योगाप्रख्यानात्। स्यान्नामेतरेषां वाक्यानामर्थपरत्वावधारणे त्वदुक्ता रीतिः, अध्ययनविधेस्तु तत्परत्वावधारणा किन्निबन्धना? अतस्तस्य तत्परत्वाभाव आपद्येत, मूलस्यैवार्थपरत्वासिद्धौ कुतस्तरां तन्निबन्धनेतरेषामवयवानां अर्थपरतावगतिः? अतो लुप्=अर्थपरत्वलोपः, योगस्यावयवस्याध्यनविधिरूपस्य, तदनु योगानामवयवानां वेदवाक्यानां अध्ययनाविधिवाक्यभिन्नानाञ्च अर्थपरत्वग्राहकस्य प्रमाणस्य अप्रख्यानात्। तद्यदि अनावृत्तिश्शब्दादिति नयमनुसरसि, तावताचाध्ययनविधिं प्रमाणयसि तर्हि तावतैव सर्वं सर्वात्मना प्रमाणीकृत्य विरन्तुमर्हसि, तदिदमप्युक्तम् 'भोगमात्रसाम्यलिङ्गाच्च' इति हेतुना। भोगमात्रे अनुभवमात्रे वाक्यार्थविशेषप्रतिपत्तिरूपे समेपि न वाक्यार्थवर्णनादिविषये साम्यम्, पूर्वोक्तात् दोषात्, तस्मात् भोगमात्रसाम्ये लिङ्गात् अस्मन्मतमेव श्रेष्ठमित्यर्थः। यतोन्ततस्त्वयाप्यवश्यमाश्रयणीयम् इति ॥

अथाध्यनविधित्वेन ग्राहकता, स्वाध्यायत्वेन ग्राह्यता चाध्ययनविधेरिति चेत् नैतदेवम्, 'लुब्योगाप्रख्यानात्' नैकदा ग्राह्यतया च ग्राहकतया चैको विधिरादानमर्हति, कर्तृकर्मणी, करणकर्मणी वा

विरुध्याते हीतरेतरम्, तदिहाध्ययनविधेः ग्राहकतया ग्रहणे ग्राह्यतया ग्रहणलोपः, इतरेतरत्र पक्षे इतरस्येतरस्य योगस्य वेदावयवरूपस्य वाक्यविशेषस्य प्रख्यातुमशक्यत्वात्, इति सर्वथा अनावृत्तिः शब्दात् इत्येव न्याय आदर्तव्य इति स्थितम् ॥

नन्वेवमभिसन्दध्महे—'स्वाध्यायाध्ययनेन यत् भावयितुं शक्यं तत् भावयेत्' इति सर्वत्र योजयामः, सर्वाण्यपि वाक्यान्यर्थप्रत्यय-माधातुं क्षमन्त इति न कुतश्चित् किञ्चिदपि वाक्यं हीयत इति, अद्धा अनावृत्तिः शब्दात् इति न्यायं सर्वात्मना चोरयित्वा प्रतिपक्षितां केवलं नाम्ना वहसीति विमर्शशीलिनस्ते दण्डयितारः ॥

अभ्युपगम्य त्वन्मते दोष उक्तः । नैव त्वेवमभ्युपगन्तुमर्हामः किङ्कारणम्? 'योगप्रमाणे च तदभावेऽदर्शनं स्यात्'। यद्यर्थप्रती-त्युद्देश्यको व्यापारो न स्यात् तर्ह्यर्थपरत्वं न स्यात्, अतोऽर्थप्रतीतावश्यं व्यापार उपाय इति लोकेऽवगत इति किलायुष्मानभिसन्धत्से, यद्येष उपायः प्रमाणं स्यात्, तर्हि तदभावे अदर्शनं वक्तव्यम्, यदि वह्निर्न स्यात् तर्हि धूमो वह्निजन्यो न स्यात्, इति यथैष दृष्टान्त एवमिह वक्तव्यम्, यद्यर्थप्रतीत्युद्देश्यकव्यापाराभावेपि अर्थपरत्वं स्यात्, तर्हि अमुकदोष आपतेतादिति । न त्वेवमस्ति अत इदमपि लिङ्गं अनुभव-मात्रसाम्येपि अस्मत्पक्षश्रेष्ठ्यै, इति सुष्ठूक्तं भोगमात्रसाम्यलिङ्गाच्चेति । अतोऽनावृत्तिः शब्दादनावृत्तिः शब्दात् इति सुदृढो न्यायः सर्वथा सुप्रतिष्ठित इति स्थितम् ॥

ननु इदं तावत् भवन्तो विदाङ्कुर्वन्तु यद्यदध्यनं विहितं तत्र सर्वं शब्दं अर्थपरं पश्यामः, यथाङ्गनामध्ययनम्, यद्येतान्यर्थपराणि न स्युः अङ्गतैषां दूरतरा । नखल्विमान्यदृष्टायाध्येतव्यानीति शास्ति शास्त्रं, अदृष्टं हि प्रयोजनं कल्पनीयं अदृष्टत्वादेव । कल्पना चान्यथा-

नुपपत्तौ नोपपत्तावित्यवोचाम । पश्यामश्चेहेमा उपपत्तीरङ्गेषु तथाहि— स्वरवर्णादिविवेकः प्रयत्नकरणे तथैव जात्यादि । शिक्षापाठात् ज्ञेयान्यर्थाभावे तु शिक्षायाः कथमिव तज्ज्ञानं स्यात्? कथन्तमां तत्व एषाङ्गम्? कर्मप्रयोगरीतिं कल्पयतीत्यस्य कल्पत्वम् । तदिदंश्चार्थाज्ञाने दूरत एवेति कथमेषः । तत्वेनाङ्गं वेदे व्याकरणेनापि शब्दानां सौष्ठववित्तिर्ज्ञाने निहन्ति नाज्ञान एवञ्च । वित्तिं द्वारीकृत्य व्याकरणस्य प्रसाध्यङ्गत्वम् एवन्निरुक्तमङ्गं वैदिकशब्दा निरुच्यन्ते । तत्रेत्यस्माद्धेतोर्ज्ञानायैव तदभ्यासः नो खल्वर्थाज्ञाने निरुक्तिवित्तिर्भवेत्सुवेत्तुरपि । छन्दःप्रत्ययपूर्वं कर्मानुष्ठानमाम्नातम् । 'यो ह वा अविदितच्छन्दोदैवतार्षेयब्राह्मणेन यजति याजयति वा स्थाणुं वर्च्छति गर्तं वा प्रपद्यते प्र वा मीयते तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति तस्मात् छन्दश्शास्त्रं ज्ञानायैवेह पठनीयम् ताराग्रहादिगत्या तिथिनिर्णीतिं ग्रहादिसौस्थित्यम् दौस्थित्यञ्च निमित्तीकृत्याचष्टे शुभान्यफलवर्गान् । प्रायश्चित्तिं चात्र ज्योतिश्शास्त्रं प्रशास्ति तत्सर्वं अर्थाज्ञाने न स्यात् तस्मात् । ज्ञानाय पाठ्यमिदम् । तस्मात् विहिताधीतिर्वित्या अर्थस्य नान्यार्था इति चेत्॥

तदुच्यते—'एतेन योगः प्रत्युक्तः' । योग=उपायो विहिताध्ययनत्वरूपः । प्रत्युक्तः=निरस्तः । केन? अनावृत्तिः शब्दादिति हेतुना । शब्दा अर्थपरा इत्युत्सर्गः । स एष निरर्गलोऽङ्गेषु प्रसरति । न चास्त्यस्यापवादिता तथा प्रसरतः कथञ्चैवं सत्यमीभ्योऽङ्गेभ्यो जायमानमर्थसम्प्रत्ययं बाधेमहि? अबाधमानानाञ्च नः कथन्तरामङ्गतादृष्टाद्वारिका न सिद्ध्येत्? दृष्टद्वारकत्वे चास्याः कथन्तमां वो वः पक्षं प्रति श्रेष्ठ्यस्य प्रत्याशा? येन पारम्परिकी व इष्टसिद्धिः प्रथेत ॥

अवश्यञ्चैवमेवैतत्प्रतिपत्तव्यम् । किङ्कारणम्? 'लुब्योगाप्रख्यानात्' 'उक्तदोषाच्च साम्नां स्तोभानाञ्चास्त्यध्यनं विहितम् । अत्रार्थ-

ज्ञानफलकत्वस्य लोपः । एवंरूपाणां हि वेदावयवरूपाणां वेदभागानामर्थो न प्रख्यायन्त इति । नन्वर्थवान् योऽध्येतव्यो भवति तदध्ययनमिह विवक्षितम्, तन्न क्वचित् व्यभिचरति इति चेत् न उक्तदोषाच्च अर्थवद्विषयकत्वं विवक्षन्तो हि शब्दानामर्थपरत्वमौत्सर्गिकमिति न्यायमेवाङ्गीकुर्वन्ति ततश्चास्मन्मतप्रवेशरूप उक्तो दोषः ॥

किञ्चान्यत् उक्तोऽस्माभिर्दोषः 'अध्यनविधिरर्थज्ञानफलको यदि नियमरूपः स तर्ह्यास्थेयः । नैवेष सम्भवति यत्कारणं निषेधेष्वध्ययनसन्ध्यावन्दनादिषु च न कथमपि नियमयितुमीश्महे' इति 'एतेन योगः प्रत्युक्तः' अत्र वेदान्ते 'सामस्तोभाद्यपि हि तत्र तत्र कर्मणि विनियुज्यते । तदात्वे चैवञ्जातीयकं पदार्थतामश्नुते । पदार्थश्च वाक्यार्थप्रतीतिं जनयति । आह च 'पदार्थानान्तु मूलत्वं युक्तं तद्भावभावतः' इति । अतस्सिद्ध्यत्यर्थज्ञानफलकत्वं सामस्तोभाध्ययनस्येति । तामिमां पदार्थविधामुपायं×योगमाश्रयामः । तेषान्नः कत्यो दोष इति चेत् तदुच्यते—'एतेन योगः प्रत्युक्त इति । एषोपि योग उपायः अध्ययनसन्ध्यावन्दनादिषु नियमयितुमशक्यत्वात् प्रत्युक्तो वेदितव्य इति । नन्वसम्बद्धमिदं वचनमुपन्यस्तम्, अध्ययनविधिरदृष्टार्थ इति । विप्रतिषेधात् । दृष्टो हि तस्यार्थः कर्मावबोधनं नाम 'दृष्टार्थता वा अध्ययनस्य, आनन्तर्ये व्याहन्येत इत्याद्याह भाष्यकृत् । असदिग्धं पूर्वेणार्थज्ञानार्थमध्ययनमवगच्छामः, असन्दिग्धञ्च परेण अदृष्टार्थत्वाभावमध्ययनस्य । 'यद्यध्ययनानुपदं गुरुकुलात् समावर्तेत, उद्वहेच्च कन्यां यावज्जीविकान्यस्य कर्मानुष्ठेयान्यापतन्ति इति न विचारस्यावकाशं लभेत, अतोवश्यमदृष्टार्थमिदमस्याध्ययनमापतेत् । ततश्च आगताया दृष्टार्थताया हानिः, नचैतन्नयाय्यम्, दृष्टार्थतिक्रमणं नामेति इति परस्य भाष्यार्थः । निगदव्याख्यातन्त्वाद्यम् । तदसम्बद्धमिदं भाष्येण

विप्रतिषेधात् एवञ्जातीयकमेव भाष्यमुपायमाश्रित्यार्थज्ञानार्थतां ब्रूम इति चेत्, 'एतेन योगः प्रत्युक्तः । अयमप्युपायो योगः भाष्यावलम्बनं नाम प्रत्युक्तः । अध्ययनसन्ध्यावन्दनादिषु नित्यविधिषु निषेधषेषु च न शक्नुमो नियमयितुमिति यतोऽवोचाम । ननु तर्हि भाष्यस्य का गतिः? इयं सा गतिः 'अनावृत्तिः शब्दादिति । अत एवाह भाष्यकारः—'क्रिया कथमनुष्ठेयेति समाम्नातारो वाक्यानि समामनन्ति तत् यानि वाक्यानि क्रियां नावगमयन्ति, क्रियासम्बद्धं वा किञ्चित् तानि कं धर्मं प्रमिमीरन्? इति । अनुष्ठेया क्रिया धर्म इति तदभिसन्धिः । तादृशधर्मबोधार्थमेव तत्पाठात् तद्बोधकत्वं च वाक्यानां स्वभाव इति च तथा सूत्रकारोपि 'नित्यस्तु स्यात् दर्शनस्य परार्थत्वात् इति । शब्दो नित्यः । दर्शनमुच्चारणम् । तत् परार्थं, परमर्थं प्रत्याययितुं यद्युच्चारितमात्रस्य शब्दस्य नाशः कथं परः प्रत्याख्येत? इति तदर्थः । तन्न अर्थज्ञानार्थता भाष्यादध्ययनविधेः सिध्यति ॥

सिद्धत्येवेति ब्रूमः कथम्? 'सा च प्रशासनात् । प्रकृष्टं प्रत्यक्षं शासनं भाष्यकारस्याधीमो यतः 'अपि च नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः, किन्त्वधीते वेदे द्वयमापतति, गुरुकुलाच्च समावर्तितव्यम्, वेदवाक्यानि च विचारयितव्यानि तत्र गुरुकुलात् मा समावर्तिष्ट, कथन्नु वेदवाक्यानि विचारयेत इत्येवमर्थोयमुपदेश इति । अर्थज्ञाने हि निष्कृष्टं अनुष्ठानमायतते, अर्थज्ञानं पुनस्तादृशं विचारं । तद्यद्यधीतिना गुरुकुले एव विचारयितव्यमभिधत्ते भाष्यकारः, अर्थज्ञानार्थतामङ्गीकृत्यैव तत्तर्हीति वक्तव्यम् ॥

'अन्यभावव्यावृत्तेश्च' व्यावर्तयति चादृष्टार्थत्वम् । यत एवमाह 'वेदमधीत्य स्नायात्, गुरुकुलात् मा समावर्तिष्टेति, अदृष्टार्थता-

परिहारायैवेति । अयमभिसन्धिः—वेदान् अधीत्य विचारार्थं पुनरपि गुरुकुले वासे वेदमधीत्य स्नायादिति विहितं अध्ययनानन्तर्यविशिष्टं स्नानं बाधितं स्यात् इति दोषे प्रसञ्जितं अध्ययनविधेरर्थज्ञानार्थत्वरूप-दृष्टार्थलाभाय वासः कर्तव्य एव, स्नायादित्यनेन च अस्नानादयो ये नियमाः अध्ययनेतिकर्तव्यतया विहितास्तेध्ययनसमाप्तौ निषिध्यन्ते। नियमेषु गुरुकुलवासोपि प्रविष्टः, स परं न निषिध्यते, यदि गुरुकुल-वासोपि निषिध्यैत गुरुनिम्नो वेदार्थविचारो न घटेत, अविचारे च न ज्ञानं, ततोध्ययनमदृष्टार्थं स्यात्, तथाविधादृष्टार्थत्वाभावाय गुरुकुल-एव वासः कर्तव्य इति। इति चेत्—सत्यम्, अध्ययनानन्तरं विचारं शास्ति। तत्पुनः 'शास्त्रयोनित्वात्'। षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्येव-ञ्जातीयकं शास्त्रं ज्ञानं विनियोगरूपं योनीकृत्यैव शास्तिः नान्ययन-विधिमात्रप्रतीक्षया यतो भाष्यकार एवाह 'क्रिया कथमनुष्ठेयेति समा-म्नातारो वाक्यानि समामनन्तीति। तदिदमनुसन्दधानानाम्न एवं सम्प्रत्ययो भवति, यदुत—अनुष्ठेयक्रियारूपधर्मबोधनं उत्सर्गतो वेद-वाक्यानां स्वभाव इति, अध्ययनश्चेह क्रिया, ततस्सा धर्मः तादर्थ्या-च्चेदं वाक्यं धर्मं प्रमिमीते इति च यथा यजेत, दद्यात्, जुहुयात्, इति। यदि पुनर्विहितया क्रियया यं कमप्यर्थमाप्नुयात् उत्पादयेत् विकुर्यात् संस्कुर्याद्वा पुरुष इति वदितुं प्रभवामः प्रमाणेन, पश्यमस्त-राञ्च तचादृशस्य विनियोजकं शास्त्रं, ततो यत्र विनियोगः समुल्यो धर्मः इति, तत्साधनत्वात् विनियुक्तोप्यर्थो धर्म इति च जानीमहे, यथा व्रीहीन् प्रोक्षति व्रीहिभिर्यजेतेति, व्रीहीनवहन्ति व्रीहिभिर्यजेतेति वा। तदाह भाष्यकारः 'क्रियासम्बद्धं वा किञ्चित्' इति (कथमनु-ष्ठेयमिति समाम्नातारो वाक्यानि समामनन्ति इति शेषोनुषक्तव्यः) एव-ञ्जातीयकञ्च वदन् वाक्यान्तरप्रतीक्षार्थनिर्णयं ज्ञापयति न खलु वाक्या-

न्तरं विनियोजकमपरामृशतः प्रोक्षणमवघात इत्येवञ्जातीयकोर्थः संस्कार-कर्मेति शतेनापि शरदाम्प्रसिद्ध्येत् तद्विनियोजकं वाक्यान्तरं प्रतीक्ष-माण एवं भाष्यकारोऽर्थमध्ययनमाहेति असन्दिग्धम् ॥

ननु क्रियानुष्ठापकं वाक्यं धर्मप्रमाणमाह भाष्यकारः, न तत्सम्बद्धानुष्ठापकं, तत्कथं भाष्यमेवमुत्पादयासि ? इति चेत् न यत्कारणक्रियासम्बद्धस्यार्थस्य अनवगमकं वाक्यं धर्मे प्रमाणं न भवतीत्याह, ततो मन्यामहे अवगमकं तादृशस्य धर्मप्रमाणमस्याभि-मतमिति अवश्यञ्चैवमेवैतत् प्रतिपत्तव्यं 'दध्नेन्द्रियकामस्य जुहुयात्' दधीतो होमसम्बद्धं धर्ममवगच्छामः, 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैस्सदो मिनुयात्' नीचैष्ट्वं गुणमितो मानविशेषसम्बद्धं धर्ममवगच्छामः, "दशमेब्राह्मणकामुपनयीत" गर्भदशमवर्षमितः उप-नयनसम्बद्धं धर्ममवगच्छमः, "श्येनचितं चिन्वीत सुवर्गकामः" श्येनाकारामितोऽग्न्याख्यस्थण्डिलरूपचयनसम्बद्धं च धर्ममवगच्छामो यतः नखल्विमानि होममानोपनयनचयनानि विदधति सन्ति धर्मप्रमाण-नीति वदन्नुपादेयवचा भवेन्मीमांसकानाम् तत्क्रियासम्बद्धार्थबोधकं बाक्यं धर्मप्रमाणं भाष्यकारो मन्यत एवेति सर्वमनवद्यम् स्पष्टञ्चाव-गच्छामः पूर्वापरं पर्यालोच्यैव भाष्यकारोर्थनिर्णयं करोतीति यत एवामह 'तादृशीं तु धर्मजिज्ञासामधिकृत्यार्थशब्दं प्रयुक्तवानाचार्यः या वेदाध्ययनमन्तरेण न सम्भवति कथम्? वेदवाक्यानामनेक विधो विचार इह वर्तिष्यते' इति यतो वेदवाक्यार्थविचारमुत्तरसूत्रैः करोति ततो वेदाध्ययनमेव अथशब्दर्थस्य अनन्तर्यस्य प्रतियोगीति भाष्यार्थः तस्माध्ययनविधिमत्रप्रतीक्षयार्थज्ञानार्थता सिद्ध्यति, अपि तर्हि विनि-योगप्रतीक्षयेति सिद्धम् ॥

अवश्यञ्चैवमेवैतत् प्रतिपत्तव्यम् इदमाम्नायते 'वसन्ते ब्राह्मणो-

ग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वर्षासु रथकार,, इति ब्राह्मणवसन्तादिविशिष्टान्याधानानि विधीयन्त इततिः प्रतीमः रथकार-कर्तृकाधानवर्जं गुणकर्माणि तानि आधानानीति सिद्धान्तः तत्कस्य हेतोः? उत्तरत्राग्नीन् विनियुनक्ति 'गार्हपत्ये हवींषि श्रपयति, दाक्षिणाग्नावन्वाहार्यं पचति आहवनीये जुहोतीत्यादिराम्नाय' इति रथकार-कर्तृकं त्वाधानमर्थकर्मेति सिद्धान्तः तत्कस्य हेतोः? उत्तरत्र विनियोगो नास्तीति तद्यद्यननुरुध्यैव विनियोगं गुणकर्मतैषु स्यात्, अपितर्हि रथकाराधानेपि तथा प्राप्नोति युक्तश्चैतत्, 'अग्निनादधीतेत्यम्' पदे गुणकर्मविधायके दृष्टे प्रथमवाक्ये द्वितीयतृतीययोस्ते अनुषक्ते तथैव दृष्टे चतुर्थे चानुषक्ते कथमकस्यात् तं स्वभावमतिवर्तेयाताम्? यत गुणणकर्मविधानं नामेति नैव त्वेवं सिद्धान्तः ततो मन्यामहे विनियोग एवायतते गुणकर्मतावगतिरति परे त्वाहुः कालः कर्ता च प्रयोगे अन्वित इति स्वभावः इति ततः प्रथमवाक्येनोत्पन्नस्य विनियुक्तस्य प्रयुक्तस्य तत्तद्गुणयोगेन, द्वितीयतृतीयौ विधी प्रयोगमन्यमन्यं विधत्तः ततश्चतुर्थेप्यसन्धिग्धं तस्यैव गुणकर्मण आधानस्य प्रयोगभेद एव सिध्येत् नार्थकर्मात्मकमन्यदाधानम् चतुर्ष्वपि वाक्येषु विशित्रमन्यदन्य-दाधानं विदधता हि विधीनां महत् गौरवमापतेत् इति ॥

नन्वनधीयाना व्रात्या भवन्तीत्याद्यस्ति प्रमाणम् निन्दयेदं वचनमध्ययनं नित्यमवगमयति अतोध्ययनविधिरर्थज्ञानार्थे तात्पर्यवान् सत्यम् नानाहिताग्निर्मियेतेति चास्ति प्रमाणं, निषेधेनेदं वचनमाधानं नित्यमवगमयति किंतात्पर्यकाः पुनर्वसन्तादिसम्बद्धाः विधयः प्रथेरन्? ननु वचनमिदमप्रतीक्षमाणेनैवं विशिष्टविधयोऽभिधीयन्ते एवन्तर्हीहापि तथा प्राप्नोति, अनधीयाना इति वचनमप्रतीक्षमाणेनाध्ययनविधिरभि-धीयत इति नन्वेवमत्र परिहरामः, विश्वाजिन्नयायात् स्वर्गफलकत्वं

विशिष्टाधानानां सम्भाव्येत, तन्निवर्तकमिदं वचनं 'नानाहिताग्निर्म्रीयेतेति' एवन्तर्हि इहाप्येवं परिहरामः, सम्भावितं स्वर्गार्थत्वमध्ययनस्य परिहृत्य नित्यतां गमयतीदं वचनमिति ॥

'स्पष्टोह्येकेषाम्' एकेषां स्मृतॄणां वचनविशेषः स्पष्टो यतोऽवगम्यते अध्ययनकर्तव्यताबोधकापेक्षया भिन्नो ज्ञानावश्यकताबोधकः, ततश्च मन्यामहे वचनान्तरप्रतीक्षयैवार्थज्ञानार्थतावाद इति । तथाहि मनुवसिष्ठो 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' इत्यादि कूर्मपुराणञ्च 'योऽन्यत्र कुरुते यत्नं अनधीत्य श्रुतिं द्विजः स वै मूढो न सम्भाष्यो वेदबाह्यो द्विजातिभि' इति । एवञ्जातीयकेभ्योऽध्ययनं नित्यं प्रतीमः तथा मनुः 'तपोविशेषैर्विविधैः व्रतैश्च श्रुतिचोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति । कूर्मपुराणञ्च 'न वेदपाठमात्रेण सन्तुष्टो वै भवेत् द्विजः पाठमात्रावसायी तु पङ्के गौरिव सीदति योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् । स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते' इति । एभ्योऽर्थज्ञानं नित्यं प्रतीमः ॥

'श्रुतेश्च' श्रुतिरपि यतोध्ययनात् पृथक् ज्ञानावश्यकतां ब्रूते ततोऽप्यध्ययनविधिर्न तदर्थ इत्यवगच्छामः तथाहि 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा' इति । श्रुतिः नन्विदं यथाश्रुतार्थज्ञानपरं, न निष्कृष्टप्रयोजनवदर्थज्ञानपरम् तत्किमेवमाचक्षणस्य सार्थकमिदं वेदवाक्यं सिध्येत् ? वयन्तु अस्मदुक्तप्रकारेणैव सार्थकमिदं वचनं प्रतीमः अथवैवं पृष्टो भवान् व्याचष्टाम् कुत एष यथाश्रुतार्थज्ञानार्थतासम्प्रत्यय इति ? । दीपिकाकृदेवमाहेति चेत् न दीपिकाकारवचनं प्रमाणं यत उक्तचराण्युपबृंहणवचनानि विरुन्ध इति ।

श्रीः

# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

(त्रैमासिकी)

सम्पुटम् ९] जुलै १९३३ [सञ्चिका ३

सम्पादकः

एच्. योगनरसिंहार्यः, एम्. ए.,

श्रीमन्महाराज संस्कृत महापाठशालाध्यक्षः.




मैसूरु

राजकीय शाखामुद्रालये सम्मुद्रिता

१९३३

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---



---

# स म्पा द की य स मि तिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए., विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्यायाः

६. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला-साहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिष-प्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलाससुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (5s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,
श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

१. रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना.
२. जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रासु.
३. प्रबुद्धकर्णाटक, बेंगळूरु.
४. मिथिक् सोसैटि जर्नल्, बेङ्गळूरु.
५. श्रीः, श्रीनगर.
६. सद्बोधचन्द्रिके, आनन्दवन.
७. कादम्बरीसंग्रह, चामराजनगर.
८. उद्यानपत्रिका, तिरुवादि.
९. सुप्रभातम्, काशी.
१०. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
११. आन्ध्रसाहित्य परिषदः पत्रिका, काकिनाड.
१२. विश्वकर्णाटक, बेङ्गळूरु.
१३. ताय्नाडु, बेङ्गळूरु.
१४. सूर्योदयः, काशी.
१५. उद्योतः, लाहोर.
१६. स्वधर्मप्रकाशिनी, मद्रासु.
१७. जयकर्नाटक, धारवाड.
१८. दि आर्यन्पात्, मुम्बै.
१९. वैखानसपत्रिका, चेङ्गल्पट्.
२०. दि फिलसाफिकल् कार्टर्लि, कल्कत्ता.
२१. रेव्यू आफ् फिलासफी एण्ड् रिलिजन्, पूना.
२२. कर्नाटिक हिस्टारिकल् रिसर्च्, धारवाड.
२३. भारती, मद्रास्.
२४. अध्यात्मप्रकाशः, बेङ्गळूरु.
२५. ला कालेज् म्यागजीन् मद्रासु.
२६. सुबोध, बेङ्गळूरु.
२७. Wiener Beitrage Zur Kulturgeschichte and Linguistik, Wien.

೨೮. The Literary and Educational Supplement to the "The Hindu," Madras.

೨೯. The School Folk. Tumkur.

೩೦. Saqi, Secunderabad.

೩೧. ಜ್ಯೋತಿಷವಿಚಾರಸಾಗರ, ಶಿವಮೊಗ್ಗ.

೩೨. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

सम्पुटम् ९]　　　　जुलै १९३३　　　　[सञ्चिका ३

त्रयी युवति सीमन्त सीमासिन्दूरबन्धवः ।
संसाराब्धिं पिबेयुर्वः कंसारेः पादपांसवः ॥

सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् ।
असद्भिः शपथैः प्रोक्तं जले लिखितमक्षरम् ॥

प्राप्य प्रमाणपदवीं कोनामाऽऽस्ते तुलेऽवलेपस्ते ।
नयसि गरिष्ठमधस्थात् तादितरमुच्चैस्तरां कुरुषे ॥

आशातुरगमारुह्य नित्यं धावति याचकः ।
न चार्तिर्न श्रमो ह्यस्य न गतावपि मन्दता ॥

(चाटुश्लोकाः)

# श्रवणानन्दम्

द्वितीयशतक प्रारम्भः

वरदमुपासिषीमहि वपारसगन्धिमुखं
शरदरविन्दफुल्लदलसुन्दरनेत्रयुगम् ।
द्विरदमहाद्रिशृङ्गचिरसङ्गतकल्पतरुं
स्थिरदरहेतिराजविलसत्करवारिरुहम् ॥ १ ॥

ललिततनो तमालनिभया शुभया प्रभया
तुलितमुखे सखेलमधुना विधुना पृथुना ।
चर वरदे सदैव हृदयापदयाभ्युदयाऽऽ-
शयमपदं निरस्य सरुषं परुषं पुरुषम् ॥ २ ॥

दहरसरोरुहे शमदमादिसमाधिसमृ-
द्ध्यानुगुणसद्गुणैर्मणिगणैरपि या निपुणः ।
बत! परदेवता हि विचिता, विचितामपिन-
श्शुभविभवेन सैव सुलभा कलभाद्रितटे ॥ ३ ॥

अनृतशतार्जिताऽतिमितवित्तमदान्धहृदां
कुफणितिभिस्तृणीकृतविनीतमनीषिगिराम् ।
स्तवननिबन्धनेन रसने व्यसनेन कृतं
वरदमनामयातुलधनाय भनाय हरिम् ॥ ४ ॥

सकलजगद्विधानपरिपालनसंहरणं
विहरणमेव यस्य विबुधाः कथयन्ति विभोः ।
वयमनिशं वहेम वरदं वरदन्तिगिरौ
विधिसवनावनार्थमुदितं मुदितं हृदि तम् ॥ ५ ॥

अविकलभक्तिमत्कमलभूहृयमेधलस-
त्तुरगवपाविपाकरसिकाऽधरपल्लवया ।
परमसमानया पतगनायकवाहनया
मम तु वशीकृतं मन इदं परदेवतया ॥ ६ ॥

तुरगमखे विधेः करटिशैलतटेऽभ्युदितः
प्रभुरविपत्तिकः पतगनाथरथो वरदः ।
सपदि ममाऽऽश्रितस्य सकलानपि दोषमयान्
प्रशमयतु द्विषः प्रथितपुष्कलदिव्यबलः ॥ ७ ॥

सुरभिलसत्प्रवालसुषुमाऽधरया स्थिरया
सुमहितया गरिष्ठजलराशिभुवा लतया ।
कृतपरिरम्भणं करिमहीधरकल्पतरुं
गुरुमपि सद्द्विजाकलितशाखमुपासिसिषे ॥ ८ ॥

अभिमतदायके विनमतां विमताऽऽर्तिकरे
करिगिरिनायके सति परानुपयाति जडः ।
फलभरसन्नते सति पुरस्सहकारतरा-
वधिमहि कः फलेप्सुरवकेशिनमाश्रयते ॥ ९ ॥

विहरति हस्तिभूभृति मनोरमया रमया
शरणमुपेयुषां कृतभवोपरमे परमे ।

प्रशमितमौक्तिकप्रकरगर्वरदे वरदे
हृदयमिदं विधाय विजहत्कलये कलये ॥ १० ॥

भद्रं तनोतु परमं परमेष्ठियज्ञक्लसोदयं
वरदनाम किमप्यपूर्वम् ।
आत्मन्यवस्थितमहो! बत! कीर्तनेन
तत्ते स्थिरं फलमथांशु(?)यदव्यपायम् ॥ १० ॥

. . . . . . . . . . . ॥ ११ ॥

. . . . . . . . . . . ॥ १२ ॥

त्वत्पादवन्दनधनान्नधनान्तरं हि
स्तम्बेरमाचलपते! स्पृहयान्ति सन्तः ।
गोदुग्धलाभमुदिता भुवि भाग्यवन्तः
स्वीकुर्वते किमु चिरन्तनमारनालम् ॥ १३ ॥

चेतस्त्रयीमकुटभावविदो विदोषाः
त्वय्यर्पयन्तु वरदे परदेवतेति ।
अज्ञोऽपि जन्तुरनुरज्यति तेऽभिरूपे
रूपे वशीकरणशक्तिरधीश केयम् ॥ १४ ॥

अम्भोधिराजतनयाऽधरपल्लवोद्य-
दप्राकृताऽमृतपरीमलकोमलं तत् ।
सान्द्रं वपाहविरुपासनवासनाभि-
स्संचिन्तये वरद ते वदनं मनोज्ञम् ॥ १५ ॥

बिम्बे रवेर्हृदि निजे धिषणावलम्बे
स्तम्बेरमाऽवनिधराञ्चलसन्नितम्बे ।
आम्नायमौलिषु च हन्त! हरे! भवन्तं
सन्तो निरन्तरमनन्त! विलोकयन्ति ॥ १६ ॥

अस्मत्कमातररिपून् हतदैत्यवर्गो
लज्जस्व माऽच्युत निहन्तुमतीव नीचान् ।
शक्रादिजित्सु नरकादिषु संप्रयुक्तं
नक्रेऽपि चक्रमिभमोक्षकृतेऽक्षिपस्त्वम् ॥ १७ ॥

रामावतारइव रञ्जयसि प्रजास्त्वं
भव्यैर्गुणैर्वरद! भेद इयांस्तु भाति ।
पित्रा कृतान्मघवरादुदभूरयोध्या-
पुर्यां पितामहकृतात्पुनरेष काञ्च्याम् ॥ १८ ॥

वैकुण्ठमण्डपमखण्डरसं विहाय
वेतण्डशैलतटमण्डनतामुपेता ।
आखण्डलादिविनुता परदेवताऽव्या-
त्सापुण्डरीकमदखण्डनपण्डिताक्षी ॥ १९ ॥

शेषस्यनन्तसरसः स्थिरसत्वचित्तैः
युक्तैश्चिरेण महितस्सहितश्श्रियाऽसौ ।
भक्तावनैकनिरतः पुरतः प्रकाम-
मक्ष्णोश्चकास्तु वरदश्शरदश्शतं मे ॥ २० ॥

ऋषयो विहाय विषयोपभोगितां
करुणारसैकवरुणालये त्वयि ।

वरदे समस्तनरदेवपूजिते
भरमादधत्युपरमाय संस्तुतेः ॥ २१ ॥

मुनितायमानपनिताय रेणुना
जनिताक्षपादवनिताय माधव ;
शरणागतार्तिहरणाय मे हृदा
भरणाय दिव्यचरणाय ते नमः ॥ २२ ॥

वरदयि वैरिविरदाय पालित-
द्विरदाय यज्ववरदाय हारिणे ।
भवते विभो शुभवते कृशान् जना-
नवते सदाऽभिनवतेजसे नमः ॥ २३ ॥

क! भवान् जगज्जनिविनाशरक्षणकृत्
क! वयं पुनस्सकलहेयभूमयः ।
कमलाक्ष! धाम तव कामयामहे
किमपेक्ष्यते न घ(ध)नचापलैः खलैः ॥ २४ ॥

भवसागरेऽत्र दिवसानहं बहू-
न्निवसानि कष्टमवसादमाश्रितः ।
प्लवसार एव भव सारलां गिरं
श्रवसा निशम्य नवसारसाऽक्ष मे ॥ २५ ॥

करवैभवेन कमलस्य दूषकं
कलिताश्रितलिभरणं च दानतः ।
वरदंत(दन्त)मच्युत! भवन्तमुच्चकै-
रुचितं करीशइति कीर्तयन्ति यत् ॥ २६ ॥

परिरक्षकत्वमभिधत्त उच्चकैः
प्रणवाऽऽदिमाक्षरमयस्तवाऽऽह्वयः ।
निखिलैरिदं हि निगमैश्च निश्चितं
वितथं भवेद्वरद! किं मयि श्रिते ॥ २७ ॥

अतिदुर्बलोऽपि बलवत्समागमात्
प्रबलप्रतीपपरिभूतिकृद्भवेत् ।
त्वदुपाश्रयाद्वरद! हस्तिभूभृता
नरकेसरी यदधरीकृतोऽमुना ॥ २८ ॥

विजहार षोडशहस्रसङ्ख्यकै-
र्वनिताजनैर्यदुपातिर्भवन् भवान् ।
अधुनाऽद्भुतं पुनरनन्तकुट्टिनी-
कृतखेलनो वरदराज! राजसे ॥ २९ ॥

. . . . . . . . . . . ॥ ३० ॥

स्नायंस्नायं पन्नगधौरेयसरस्यां
पायंपायं पापहरं त्वच्चरणाम्भः ।
वारंवारं वारणशैलेश! भवन्तं
सेवंसेवं देव! नयेयं दिवसौघान् ॥ ३१ ॥

कालेकाले कानपि कैङ्कर्यविशेषान्
कारंकारं कायममी सार्थयमानाः ।
आनन्दन्ति श्रीधर! सन्तः प्रणतानां
ज्ञानं दन्तिक्ष्माधरनाथ! प्रथयन्ति ॥ ३२ ॥

वैकुण्ठ! त्वां मण्डितवेतण्डमहीध्रं
रक्षाशौण्डं साधु भजन्तो न भजन्ति ।
चण्डांशुं वा वायुसखं वा वरुणं वा
श्रीकण्ठं वा वृत्रहणं वा द्रुहिणं वा ॥ ३३ ॥

पूर्वं यस्त्वं पुण्यविशेषोदितहर्षो
गीर्वाणानामाद्यमकार्षीश्चतुराम्यम् ।
अत्याश्चर्यं हस्तिगिरीन्द्रे हयमेधे
दत्तं हव्यं तेन तदाऽऽद्यमकार्षीत्त्वां ॥ ३४ ॥

वक्त्रादासन् वासववह्निक्षितिदेवा
धाता नाभेर्व्योम च पादाद्वसुधाऽऽद्याः ।
बाहुभ्यां ते क्षत्रभिनो यस्य दशस्त्वं
हस्तिक्ष्माधरनायक! हस्ते सपिताभूः ॥ ३५ ॥

गम्भीराम्भस्सम्भवदम्भोरुहदम्भ-
च्छेदारम्भि श्रीसुभगं भावुकनेत्रम् ।
बिम्बे ध्यायन्त्यम्बुजबन्धोर्मुनयो यं
स त्वं कुम्भिक्ष्माभृति पीताम्बर! भासि ॥ ३६ ॥

निर्लज्जानां सज्जनहिंसानिरतानां
कोपान्धानां कुक्षिभृतां कुक्षितिपानाम् ।
सेवा माभूदेव हि देवाधिप नित्यं
कैङ्कर्यं स्तात्त्वत्पदपङ्केरुहयोर्मे ॥ ३७ ॥

कर्माऽप्येके कामयमानास्तव मोदं
कालेकाले कौशलवन्तः कलयन्ति ।

ध्यायन्त्यन्य वारणशैलेश! वयं त्व-
    य्याकिञ्चन्यादात्मभरं न्यस्य चरामः ॥ ३८ ॥

ब्रह्मा यंयं प्राक्षिपदग्नौ हयमेध
    दिव्येष्वेतेष्वच्युत हव्येष्वनघेषु ।
सर्वेषु श्रीवारणशैलेश! वपां त्वं
    स्पष्टं प्राश्नास्तत्र महिम्नो ग्रहणेन ॥ ३९ ॥

साक्षाद्यागादब्जभवेन क्रियमाणा-
    ज्जातं श्रीतं क्लृप्तकटाक्षामृतवर्षम् ।
वीक्ष्य श्यामं त्वां मुनयश्श्रीश विजिज्ञुः
    पर्जन्योऽसौ सम्प्रति यज्ञाद्भवतीति ॥ ४० ॥

वरदं वैरिञ्चाध्वरवपारसास्वादसादरं वन्दे ।
नागाऽहार्यो(ऽऽहार्याऽऽ)द्वयमिह निकेतनं केतनं च यस्याहुः ॥

किञ्चन कञ्जनिवासाकिलिकिञ्चितमञ्चितं विबुधैः ।
संचरतु मानसे मे कुञ्जरगिरिगतमचञ्चलं ज्योतिः ॥ ४२ ॥

कम्बुधरं जगदम्बाबिम्बाधरचुम्बनैकजीवातु ।
अम्बुधरदीप्ति वस्तु स्तम्बेरमगिरिवितंसमवलम्बे ॥ ४३ ॥

किमकिञ्चनजनवञ्चनचणचञ्चलकाञ्चनासिदसत्तमैः ।
अल्पैरुपसर्पामः कल्पकमप्राकृतं तु करिशैले ॥ ४४ ॥

प्रत्यन्तपन्नगशायिनमधिशाखं दृष्टमङ्गुनोच्छ्रायम् ।
सेवेय सर्वगन्धं हरिचन्दनमाश्रितद्विपाद्रितटम् ॥ ४५ ॥

चिन्तामणिं निषेवे दन्तावळशिखरिकन्दरे दृष्टम् ।
हन्तारमान्तराणां सन्तापानां तु हरितसुकुमारम् ॥ ४६ ॥

सुन्दरमुद्धृतमन्दरमाश्रितकरिशिखरिकन्दरं किमपि ।
दैवतमेव तदीडे नैव ततोऽन्यत्र वागियं रमते ॥ ४७ ॥

विहितश्श्रुत्या यज्ञे वरदो यजमान एव ऋत्विग्भ्यः ।
यजमानाय विधात्रे वरदस्त्वं करिगिरीश! चित्रमभूः ॥ ४८ ॥

मुखमर्यमरविन्दं ते(ऽमुकुलं)
पश्यामि सुन्दरं स्मेरम् ।
विचिकसिषति यदा नित्यं
सूर्यावळिर्यदालोकात् ॥ ४९ ॥*

तरितुं संसृतिसरितं
चरितं परितन्यते न किञ्चिदपि ।
दुरितं पुनरङ्कुरितम्
वरद दिश स्वेक्षितं कृपाभरितम् ॥ ५० ॥

प्रणतमरुत्तरवे द्यां
हित्वाऽभ्युदिताय धातुरुत्तरवेद्याम् ।
विधूतवनजनिलयाय
स्वस्त्यस्तु कृताखिलावनजनिलयाय ॥ ५१ ॥

---

* श्लोकेऽस्मिन् अपच्छन्दः दृश्यते ।

( ) इति चिह्नितस्थले ग्रन्थपातश्च । (सं).

'विचिकसिषति वरदानघ नित्यं सूर्यावलिर्यदालोकादि' तिपूरणं समीचीनमिव भाति । सहृदयैरिदमाकलनीयम् । (सं).

निर्जितदानव पाया
  स्त्वं भोक्ताऽग्नौ कृतप्रदानवपायाः ।
शिरसीभवरागस्य
  स्फुरसि च्छेत्ता य ईश! भवरागस्य ॥ ५२ ॥

विपुलतमं दाराणां
  निलयं वक्षः स्वभक्तमन्दाराणाम् ।
तव वरद! ध्यायामः
  शरणं त्वामिह कृपाभृ(द?दा) ध्यायामः ॥ ५३ ॥

वीक्षितसन्तानेन प्रदिशेष्टं धीलतावसन्तानेन ।
कान्त्या घनतापन्नः त्वं वरद निराकुरुष्व घनतापं नः ॥ ५४ ॥

धाता स मुदा यज्ञ-
  श्रेष्ठमकृत यं हि वेदसमुदायज्ञः ।
तमितोद्वेगापगमै-
  स्स्नातुं मुनिभिस्स्तुतोऽपि वेगापगमैः* ॥ ५५ ॥

सदृशाधिकरहितस्य
  श्रीरमण! नमस्क्रियाविधिकराहितस्य ।
चिरमधुना वन्देऽहं
  तव वरद! भवाब्धितरणनावं देहम् ॥ ५६ ॥

करिगिरिनायक रोषि
  स्वान्तं यस्त्वं हि दुर्जनाय करोषि ।

---

* पूर्वं वेगाख्यनद्यां स्नानमाचरन्त ऋषयः प्रवाहेण दूरमाकृष्टा इति कथा श्रूयते । वेगाख्यनद्याः आपं अपां समूहं गच्छद्भिरिति पदार्थः ॥ (सं०)

शरहृतपरमद! यायाः
स त्वं मे हृदि पदस्य परमदयायाः ॥ ५७ ॥

अतिपीवरदम्भजनं
विहाय नय चित्त! वरदं भजनम्।
त्वयि न हितापायस्स्या-
देवं सति हि भवोऽपि न हि तापाय स्यात् ॥ ५८ ॥

प्रतिदिवसं देहस्य
स्थितये दुष्कृतिकृतिष्वसन्देहस्य।
मम वरदानवनस्य
त्वं गतिराश्रय! सतां सदानवनस्य* ॥ ५९ ॥

द्रुहिणविताने कमन
श्रियश्शुभं रूपमपहृतानेकमनः।
दर्शितवानेतत्त्वं
परमं त्वां मुनिजने स्तुवाने तत्त्वम् ॥ ६० ॥

नमस्ते मस्तेन त्रियुग! करवै विश्वगुरवे!
समस्तं कस्तेजश्शमितविमतस्तोमतमसः।
विवित्सामात्सर्यग्रहगदचिकित्सा भवमपि
प्रपित्सा वात्सल्यायतन! यत उत्सारयति ते ॥ ६१ ॥

हरत्वेनः पीनं द्रुहिणहयमेधप्रविलस-
द्वपागन्धाक्रान्तं वदनमनवद्यं वरद ते।

---

* सदा नवनं कुर्वाणस्येति यावत् ॥ (सं)

यदेतत्पश्यन्तो यदुतिलक सौन्दर्यतिल(काः ? कं)
सुधाधाम्नः प्राहुस्सुलभमवलेपस्य विलयम् ॥ ६२ ॥

अपारैर्व्यापारैर्जठरपिठरीपूरणकृते
समारब्धैरुर्वीक्षितिभृदनुसारादिभिरलम् ।
स्थिरोच्छ्रायं सायन्तनकुवलयच्छायमनघं
श्रियःकान्तं स्वान्तं मम भजतु भान्तं करिगिरौ ॥ ६३ ॥

किमर्था विद्वत्ता किमिह वपुषा गौरवपुषा
किमर्थानामेषां फलमुपचितानामनुदिनम् ।
किमर्थं सामर्थ्यं शृणुत भवतां हन्त! मनुजाः
न पूजा निर्व्याजा यदि वरदराजाय रचिता ॥ ६४ ॥

स एवायं देवो विबुधकृतसेवो निरुपमं
विधत्तां वो मोदं त्रिपुरहरकोदण्डदळनः ।
सतीभावभ्रश्यद्धनवृजिनपश्यत्पदवधू-
शिलारूपच्छेदी विधिसवनवेदीमुपगतः ॥ ६५ ॥

पराहन्ताहन्ता प्रणतजनसन्तापशमनो
मनोज्ञानां ज्ञानाद्यनुपमगुणानां निधिरसौ ।
श्रियोऽहन्ता दन्तावळशिखरिसन्तानकतरुः
कृतातङ्कात्पङ्कादवतु विकलङ्काब्जवदनः ॥ ६६ ॥

विचित्राधव्याघ्रे विषयविषवृक्षौघजटिले
भवारण्ये घोरे बहुगदमहाकण्टकवृते ।
विशालाशापाशान्तरनिपतितं चित्तहरिणं
विमोक्तुं कश्शक्तो वद! वरदराज! त्वदपरः ॥ ६७ ॥

स्वरूपं ते सत्यं ननु! वरद! सत्या प्रियतमा
वचस्सत्यं सत्यस्त्वदवगमहेतुश्च निगमः।
पदं चाऽऽहुस्सत्यव्रतमिदमतस्संस्तुतिगदं
व्युदस्येन्नासत्यात्मकमखिलमेतत्तव यतः ॥ ६८ ॥

सतां संघं शंखः प्रबलयतु (जागर्तु?) निहत-
द्विषच्चक्रं चक्रं हृतसुरगदा राजतु गदा।
कृपासिन्धो बन्धं श्लथयतु कृपाणो वरद ते
निरस्तांहश्शार्ङ्गं नियतमयतां दिग्विजयिताम् ॥ ६९ ॥

अटित्वा तीर्थानि द्रुतमिह पठित्वाऽपि निगमान्
नवं पूर्तं सृष्ट्वा ननु बहुभिरिष्ट्वापि सवनैः।
सुरान् भक्त्या स्तुत्वा स्वमति बहु दत्वा च तनुमा-
ननत्वा नाथ! त्वामतितरति न त्वार्तिजलधिम् ॥ ७० ॥

तमोनिचयमोचने तपनचन्द्रमोलोचने
प्रक्लृप्तबलिवञ्चने प्रणयपालिताकिञ्चने।
द्विपाचलवतंसके द्विरदवैरिणो हिंसके
स्थितिर्भवतु भाव! ते स्थिरतरे परे दैवते ॥ ७१ ॥

हृतस्तनदपूतने हृदय संवसाऽनूतने
व्युदस्तयमयातने विधृतचेतनाचेतने।
गजाचलनिकेतने गरुडविस्फुरत्केतने
मुरादिबलशातने मुनिषु मुद्रसश्च्योतने ॥ ७२ ॥

मुकुन्द! नृहरे! हरे! मधुरिपो! मखाश! प्रभो!
करीश! कमलापते! वरद वासुदेवेति ये।

पठन्ति न लुठन्ति ते पटुकृतान्तभृत्यच्छटा-
कठोरतरतर्जनैर्हृदयदारके नारके ॥ ७३ ॥

पनाय न धनाशया परुषभाषणान् भीषणा
नहीनिवमहीपतीन्फलितमन्ततः किं ततः ।
सरस्वति सुरस्तुतं स्तुहि गृहीतवैतानस-
द्रुपारसमपारसंसृतितितीर्षया माधवम् ॥ ७४ ॥

भृशं खलु विशृङ्खलश्चिरममेयया मायया
शताधिकमतानिषं बत! सकौतुकं पातकम् ।
सदा वल मदावलस्थिरशुभावहे भाव हे
समञ्जसितकञ्जभूसवनकर्मणि ब्रह्मणि ॥ ७५ ॥

पितामहवितानभुव्यधिहुताशमाविर्भव-
न्मुदां चयमुदञ्चयन्मुनिसुपर्वणां सर्वतः ।
भवानिह भवामितार्त्यनुभवाज्जवादाश्रित-
द्विपाचल कृपानिधे! वरद! पातु मामातुरम् ॥ ७६ ॥

पदं द्युसरिदास्पदं प्रणमतां करः श्री(करः?)
सदा(वि?)हरदिन्दिरं शुभभुजान्तरं सुन्दरम् ।
कृपाशिशिरमीक्षणं कृपणखेदहारि स्मितं
वपासुरभिलं मुखं वरदराज! ते राजते ॥ ७७ ॥

हिरण्यकशिपुर्बली हतमरुद्गणो रावणः
खरश्च नरको बकस्स च मुरो मधुः कैटभः ।
परे च शिशुपालकद्विरदकेशिकंसादयः
त्वया वरद! लीलया क्षितिभरा निराचक्रिरे ॥ ७८ ॥

मुदां पदमुदारधीर्मुनिभिरश्वमेधे विधेः
निरामयगिरामयं विधिरिति व्यपादिश्यथाः ।
य एव किल! देवतापरिषदा त्वमस्तूयथाः
रमासख! स मादृशां नयनगोचरो रोचसे ॥ ७९ ॥

कृतार्थितविरिञ्चने कृतभजत्सुखोदञ्चने
प्रक्लृप्तबलिवञ्चने धनपतीकृताकिंचने ।
श्रितेभगिरिकन्दरे धृतपरिश्रमन्मन्दरे
मनः! प्रविश सुन्दरे महितमन्दिरे सेन्दिरे ॥ ८० ॥

निपुणैरपि विश्रुतैर्मुनीन्द्रै-
र्निगमैश्चासुगमोऽप्ययं दयालुः ।
वरदश्शरदश्शतं मदक्ष्णोः
पुरतः श्रीपतिरत्र सन्निधत्ताम् ॥ ८१ ॥

करुणावरुणालयं प्रजानां
कमनीयैर्हृदयं गुणैर्हरन्तम् ।
कमलागृहमेधिनं प्रपद्ये
करिशैले कृतसन्निधिं सुरेशम् ॥ ८२ ॥

स्फुरदङ्गददिव्यरत्नहारं
मुरदम्भक्षपणावितत्रिलोकम् ।
वरदं शरदम्बुजाक्षमीडे
हरदम्भोळिधरादिपूजिताङ्घ्रिम् ॥ ८३ ॥

त्रपया वदनं तु वासितं ते
कृपया हस्तिगिरीश! मानसं च ।

रमया च भुजान्तरं मुरारे!
क्षमया पार्श्वमतोऽसि लोभनीयः ॥ ८४ ॥

अधुना मधुनाशनाय तुभ्यं
वरदाय स्फुरदायतेक्षणाय।
नमसां मम साङ्गतां गतानां
शतकं नाशितकंसशक्तये स्तात् ॥ ८५ ॥

अनवद्यमनर्घमप्रमादै-
रनवद्यं सुपरीक्षकैरशेषैः
करटक्षितिभृत्किरीटरत्नं
किमपि क्रीडति मानसे चिरन्नम् ॥ ८६ ॥

भवतापशमाय भक्तिभाजा-
मवतारं परितन्वती गजाद्रौ।
नवतामरसायतेक्षणा मा-
मवतादादिमदेवता विषादात् ॥ ८७ ॥

नवबिम्बजयक्षमाधराभ्यां
कृपया प्राप्तकरिक्षमाधराभ्याम्।
अयमञ्जलिरस्तु निस्तुलाभ्या-
मनघाभ्यामनपायदम्पतिभ्याम् ॥ ८८ ॥

मनसा कलयामि भक्तिभाजा
घनसावर्ण्यमनोज्ञदिव्यदेहम्।
भुवनावनलीलमब्जयोने-
स्सवनाग्नावुदितं परं पुमांसम् ॥ ८९ ॥

असितं वपुषि स्मिते सितं व-
स्त्वधरे रोहितमम्बरे तु पीतम् ।
कुशलाय तदस्तु कुन्तले य-
त्कुटिलं राजति कोमलं तु चित्ते ॥ ९० ॥

जयति पङ्कज . . . . . . . . ॥ ९१ ॥

(अतःपरं ग्रन्थो नोपलब्धः)

समाप्तं श्रवणानन्दम्.

# श्रवणानन्दस्य शुद्धिपत्रम्.

(प्रथमशतकस्य)

| श्लोके. | अशुद्धम्. | शुद्धम्. |
|---|---|---|
| १ | यतिश्रेष्ठा | यतिश्रेष्ठौ |
| ७ | सम्पादयेधामनः | सम्पादयेथामनः |
| १० | आपादाह्लव | आपाताह्लव |
| १२ | तुर्याम्नवापंचमे | तुर्याम्नवापञ्चमे |
| २१ | कार्येऽभिस्तूते | कार्येपुस्तूते |
| २३ | त्वदनाश्रितश्च | त्वदनाश्रितस्य |
| २४ | चक्रीयता | चक्रीयता |
| ३० | जृम्भणकरश्री | जृम्भणकरश्री |
| ३५ | जातं मम | जातं मुहुः |
| ३८ | धातृपतन | धातृवदन |
| ३९ | मदोऽमित्रं | मदाभित्रं |
| ४३ | भक्तदत्ताभयानां | दत्तभक्ताऽभयानां |
| ४४ | घटितमूर्ति | घटितकीर्ति |
| ४८ | संस्मराम्यन्तरात्मन् | सन्तराम्यन्तरात्मन् |
| ४९ | देवानिर्घाति | देवानिर्हन्ति |
| ५३ | कायादभवाभय | कायाधवाऽभय |
| ५४ | विरचये | रचये |
| ५६ | मेऽधुना | मेयथा |
| ६६ | मदहन्तृदानवानां | मदहन्तृ दानवानां |
| ७० | प्रसाधये द्यां | प्रसाधयेद्यां |
| ,, | निषादकानां | निषादकालिः |
| ८३ | कुट्टाकदष्ट | कुट्टाकधृष्ट |
| ८६ | संस्तृतिरूपेण | संस्तृतिरूपे |

| श्लोके | अशुद्धम्. | शुद्धम्. |
|---|---|---|
| ,, | कारागेहेकृष्णाविवृद्धौ | कारागेहेकृष्णाविवृद्धे |
| ,, | मव्याम्नागो | मव्यानाऽगो |
| ९० | गुरुतांवितर्ति | गुरुताविरर्ति |
| ९६ | मधोक्षजनिरञ्जन | मधोक्षज निरञ्जन |

(द्वितीयशतकस्य)

| | | |
|---|---|---|
| १ | ललिततनो | ललिततनौ |
| २ | हृदयाप | हृदयाऽप |
| ३ | समृध्या | समृध्य |
| ,, | मेणिगणै | मुनिगणै |
| ८ | सुषुमा | सुषमा |
| ,, | मथांशुय | मधारय |
| १४ | धनान्तरं हि | धनान्तराय |
| २३ | वरदयि | वरदाय |
| ,, | पालत | पालित |
| २६ | श्रितलि | श्रिताालि |
| ३४ | मकार्षीत्वं | मकार्षीत् |
| ३५ | क्ष्माधरनायक | क्ष्माभृन्नायक |
| ४५ | पन्नगशायिन | पन्नगेशाय |
| ५४ | वसन्तानेन | वसन्ताऽनेन |

# पञ्चरत्नम्.

चराऽचरतृणादनोऽणुतरयोगिहृन्मन्दुरा-
गृहश्शशिरुचिः परः परमभक्तिरज्जुग्रहः ।
भवोग्रपथतारको निगमरूपहेषोनघ-
स्तनोतु भवुकं हयस्सुगुणकृष्णभूमीपतेः ॥ १ ॥

सौधे धूपैरनेकैर्विकसितकुसुमैर्गन्धनीरैस्सुगन्धे
हृद्ये चित्रैर्विचित्रैरहिविहगमुखैः पुत्रिकाजालकैश्च ।
स्वस्थासीनं सुलग्ने नवरजनिमहे रत्नसिंहासने त्वां
कृष्णेन्दो! वीक्ष्य शश्वन्निरवधिकमुदं सर्वभूतानि यान्ति ॥ २ ॥

कृष्णक्षोणीश राज्यश्रियमपरिमितां तावकीनां निशम्य
ज्ञातुं तामुत्सुकेन प्रमुदितमनसा जिष्णुना चोदितोऽसौ ।
हंसर्सिंहासनोर्ध्वे नवमणिखचितो भासुरो ज्ञातमर्थं
भर्त्रे शक्राय वक्तुं ततगरुदमुतो नाकगामीव भाति ॥ ३ ॥

हृद्यायां करिभिर्हयैर्वृषवरैरुष्ट्रैः पदातिव्रजै-
र्दीप्रैर्वैद्युतदीपतोरणगणैर्यानस्स्ववाद्यैर्भटैः ।
रथ्यायां निशि कृष्णभूपतिमिभस्कन्धाधिरूढं मुदा
पश्यन्तः सनिमेषतामुपनतां के वा न निन्धुर्जनाः ॥ ४ ॥

चिराय भुवि राजतां यदुकुलाब्धिसोमः प्रिय-
स्सतामनलधीर्दयाजलनिधिर्नयाध्वानुगः ।
हरेस्त्रिभुवनेशितुः करुणया श्रियामालय-
श्चिरायुरमितद्युतिर्नृपतिमौलिकृष्णप्रभुः ॥ ५ ॥

करूरु शेषाचार्यः.

# प्रदोषसङ्गः

---

श्रीमुखवत्सरीयश्रावणकृष्णद्वितीयायामिन्दुवासरे श्रीमन्महीशूर महाराजसंस्कृतसरस्वतीप्रासादमहापाठशालायां श्रीविद्यागणपतिराजत-कवचधारणमहोत्सवाऽवसरे ज्योतिश्शास्त्रप्रधानोपाध्यायैः संस्थानमहा-विद्वद्भिः करूरुशेषाचार्यैर्विरचिताः पाठिताः श्लोकाः—

यस्तालवृन्तनिभकर्णयुगप्रकम्प-
वातैर्नमद्दुरिततूलततिं धुनानः ।
सर्वान्तरायतमसां मिहिरः स भातु
चित्ते पुराणगजमौलिरुदारतेजाः ॥ १ ॥

छात्राणां परिषत्प्रदोषसमये लम्बोदराराधने
लोला विद्वदुदारवाङ्मुखगणैर्गानैस्सवाद्यैः प्रियैः ।
घोषैर्वेदगिरां शुभैश्च कवनैरन्त्याक्षरस्पर्धया
हृद्या प्रत्नमतङ्गजाऽनघकृपाभूम्ना समिन्धां भुवि ॥ २ ॥

विद्यावेश्मनि भासुरेऽत्र च पुरा श्रीमन्नृसिंहाभिध-
प्रज्ञासिन्धुयतीश्वरैर्गजमुखो भक्त्या प्रतिष्ठापितः ।
श्रीविद्यानववालुकेश्वरयतीशैरद्य संधारितो (संयोजितो)
दिष्ट्या राजतजागरेण महता दुग्धे जनानां मुदम् ॥ ३ ॥

पूर्वस्मिन्नाश्रमेऽत्राऽपि च बहुविकसाच्छिष्यलोकानुकम्पाः
प्रोत्साहं चाऽत्र कर्मण्यखिलजनहिते दुष्करे सन्दुहानां ।
साह्यं मान्यं च कुर्वन् शुभगुणजलधिः कृष्णभूमीमहेन्द्रो ।
भूमावाचन्द्रतारं यदुकुलतिलक स्फीतकीर्तिर्जयन्तु ॥ ४ ॥

**टि. आर्. चेन्निगरायपौराणिकः,**
**कार्यदर्शी.**

## प्रमोदाविषयः

विदितमेवैतत् तत्रभवतां भवतां सर्वेषां यदस्यां पाठशालायां श्रृङ्गेरिश्रीमज्जगद्गुरुनृसिंहभारतीस्वामिभिः प्रतिष्ठापितश्श्रीविद्यागणपतिर्विराजत इति । मोदामहे च नितान्तं तत्सन्निधौ प्रतिप्रदोषसमयं, अन्त्याक्षरस्पर्धोपन्यासादयः प्रचलन्तीत्यावेदयितुम् ॥

मन्ये सर्वेऽप्यजानन् भगवते गजवदनाय राजतजागरं निर्मापयितुमयतन्त विद्यार्थिन इत्यमुमंशम् । अहो! बलीयसी खल्वीश्वरेच्छा! समयेऽस्मिन् अस्मद्भागधेयेन, भगवत्प्रेरणया, लोकानुजिघृक्षया वा श्रीमत्परमहंसपरिव्राजकाचार्याः **कूड्लिशृङ्गेरिजगद्गुरुश्रीविद्याभिनववालुकेश्वरयतीश्वराः** पाठशालामिमामभ्युप्य अमन्दमानन्दमजनयन् जनानां सर्वेषां विशेषतो विदुषां विद्यार्थिनां चात्रत्यानाम् । समीचीनं समयमिममवबुद्ध्यैव वत्सरेऽस्मिन् श्रावणकृष्णाद्वितीयायामिन्दुवासरे (७–८–१९३३) भगवतो गजाननस्य राजतकवचधारणमहोत्सवो निर्वर्तनीय इति निरचिन्वन् विद्यार्थिनः । वासरे तस्मिन् प्रातरष्टघण्टावादनावसरे भगवतो गजाननस्य अभिषेकादयो निरवार्तिषत । तदनु अभिजिन्मुहूर्ते, प्रभूणां **श्रीकृष्णसार्वभौमनां** उदारेण साहाय्यकेन निर्मापितं राजतकवचं श्रीचरणाः स्वदिव्यपाणिना भगवते समर्प्य छात्राणामभ्यर्थनां सार्थामारचयामासुः । तदनु सर्वाभिसारेण समापितं मङ्गलारात्रिकप्रसादविनियोगादिकं मध्यंदिनौपयिकम् ॥

सायं पुनरस्मदभ्यर्थनामङ्गीकुर्वाणाः श्रीचरणाः सप्तघण्ठावादनसमये भगवद्गीतोपन्यसनसुधाधारामासिञ्चन् । पिपीलिकाभिरपि दुष्प्रवेशे

तस्मिन् सदस्यालेख्यार्पितइवासीत् श्रोतृवर्गः । अनुपदमेव महाविद्वद्भिः श्रीमद्भिः करूरुशेषाचार्यैः ग्रथिताः मङ्गलश्लोकाः पठिताः । फलपुष्पादीनि समर्प्य श्रीचरणेभ्योऽगृह्णन्नाशिषो विद्यार्थिनः । ततः महापाठशालाध्यक्षाः सुगृहीतनामानः श्रीयोगनृसिंहार्याः पारिषदप्रतिनिधितया सभक्त्युन्मेषं वन्दनान्यर्पयामासुः । तदनु निरमायि सहर्षं श्रीगजाननीराजनमङ्गलेन साकं श्रीमहाराजाशीर्वचनमपि ॥

विद्यार्थी—एन्. नरसिंह्माचार्यः.

॥ श्रीः ॥

# बीजफलविमर्शः



श्रीमन्महीशूरमहाराज संस्कृतसरस्वतीप्रासादमहापाठशालायां
ज्योतिश्शास्त्रप्रधानोपाध्यायेन संस्थानमहाविदुषा
करूरु शेषाचार्येण
विरचितः



मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रितः
१९३३

॥ श्रीः ॥

## बीजफलविमर्शः.

ब्रह्माचार्यवसिष्ठमुख्यमुनिराट्ग्रन्थालिमूलैर्धितः
श्रीपत्यार्यभटादिपण्डितमणिग्रन्थौघशाखाञ्चितः ।
श्रीमुञ्जालगणेश्वरादिकरणग्रन्थप्रवालावृतः
ज्योतिस्तन्त्रमहातरुर्विजयतां सत्कालपुष्पश्चिरम् ॥

गणकप्रकाण्डाः—नेदं तिरोहितं नाम मतिमतामशेषाणाम् । यन्निखिलश्रेयस्साधनभूतानि वेदपूर्वभागोदितान्यग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनि वैदिकानि जीविकौपयिकानि राजोपगमन, विलोकन, भाषण, कृषि, वाणिज्यादीनि लौकिकानि च सर्वाणि, कर्माणि कालैकनिबन्धनानि सुसमये विधिवदनुष्ठितानि सर्वकामदुघान्यसमये विरचितानि भृशमनर्थावहानि च इति ॥

स च कालो नभोगगत्यवगम्यः । गतिस्तु सगोलगणितगम्या । तदाह श्रीब्रह्मगुप्तः—

गणितज्ञो गोलज्ञो गोलज्ञो ग्रहगतिं विजानाति ।
यो गणितगोलबाह्यो जानाति ग्रहगतिं स कथम् ॥

इति । सा च तदातदा कालभेदेन भिद्यते । स च भेदः प्राक्तनगणितावगततादात्विकवेधोपलब्धखेटचारयोर्वैषम्यदर्शनरूपमन्तरम् । तदेव बीजमिति कथ्यते । तच्च सूक्ष्मोक्षिकया नलकादिभिः स्फुटैर्यन्त्रैः प्रसाध्य तत्संस्कृतामेवगतिमूरीकृत्य तदनुगुणान् नव्यान् ग्रन्थान् व्यतानिषुरुदारधिषणाः प्राञ्चोज्यौतिषाचार्याः ॥

संप्रदायोऽयं बहोः कालाद्विदग्धगणकपारम्परीतः समासादितः। यदाह श्रीमान् गणेशदैवज्ञः—

ब्रह्माचार्यवसिष्ठकश्यपमुखैर्यत्खेटकर्मोदितं।
तत्तत्कालजमेव . . . . . . . . ॥

इति। लल्लब्रह्मगुप्तश्रीपतिभास्करैर्गणकमणिभिः स्वग्रहगणिते मध्यमाधिकारे मध्यखगेषु प्रथमं—

१. "शाके नखाब्धिरहिते शशिनोऽक्षदस्रैः।
२. खखखार्कहृताब्देभ्यः।
३. ब्रह्मवासरगताब्दसंचयात्।
४. खाभ्रखार्कैर्हृताः कल्पयाताः समाः"।

इति निश्शङ्कं बीजसंस्करणं प्रविधाय ततः स्फुटाधिकारे सबीजानामेव मध्यखेटानां स्पष्टीकरणस्य सबीजाभ्यां स्पष्टाभ्यामर्केन्दुभ्यां तिथ्याद्यानयनस्य चाभिहिततया बीजसंस्करणं सर्वग्रहसाधारणमिति स्पष्टतरं प्रतीयते॥

श्रीवराहमिहिरोऽपि सर्वेष्वपि नभोगेषु बीजसंस्करणमावश्यकं मन्यते, रवीन्द्वोर्बीजदानं न कुत्रापि निषेधति च॥

तदाह स पञ्चसिद्धान्तिकायाम्—

'पूर्वाचार्यमतेभ्यो यद्यच्छ्रेष्ठं लघु स्फुटं बीजम्।
तत्तदिहाऽविकलमहं रहस्यमभ्युद्यतो वक्तुम्'॥ इति॥

'अत्रोपलब्धिरेव वासना यद्वर्षसहस्रषट्कं यावदुपचयस्ततोऽपचय इत्यत्राऽगम एव प्रमाणं नान्यत्कारणं वक्तुं शक्यत इत्यर्थः' इति शिरोमणौ मध्यमाधिकारे ब्रुवाणः श्रीभास्करार्यो बीजस्योपलब्धिमूलकत्वमागमसिद्धत्वं च प्रतिजानीते॥

किञ्च 'शास्त्रमाद्यंतदेवेदम्' इति सूर्यसिद्धान्तीयपद्यगूढार्थप्रकाशव्याख्यायां 'एवं च युगमध्येऽप्यवान्तरकाले ग्रहचारेष्वन्तर-

दर्शने तत्तत्काले तदन्तरं प्रसाध्य ग्रन्थांस्तत्कालवर्तमानाभियुक्ताः कुर्वन्ति तदिदमन्तरं पूर्वग्रन्थे बीजमित्यामनन्ति' इति बीजस्यावश्यकत्वमार्षत्वं च समर्थयन् रङ्गनाथस्तद्ग्रन्थान्ते 'यथा शिखामयूराणाम्'— इत्युपक्रम्य 'कार्याणां शुभसिद्धिदम्'—इत्यन्तं समुल्लिखितस्य बीजोपनयाध्यायस्य 'इत्यस्य क्वचित् पुस्तके लिखितस्य' इत्युपक्रम्य 'केन चिद्धृष्टेन बीजस्यार्षमूलकत्वज्ञापनायान्तेऽत्र बीजोपनयाध्यायः प्रक्षिप्त इत्यवगम्य न व्याख्यात इति मन्तव्यम्'—इत्यन्तं बहुधा प्रक्षिप्ततामाशङ्कमानो बीजं खण्डयन् स्वोक्तिविरोधं न जानाति। सुधीभिरिदं विमृश्यमिति सुधाकरः स्वीयसूर्यसिद्धान्तटीकासुधावर्षिण्यामाक्षिपति ॥

युक्तमेवैतत्। कथमन्यथा परिहार्यो रङ्गनाथदैवज्ञव्याख्यानपूर्वोत्तरग्रन्थविरोधः। यथा शिरोमणिपरिशिष्टो बीजोपनयस्तथा सूर्यसिद्धान्तपरिशिष्ट एव बीजोपनयाध्याय इति दृग्गणितविदः। दृश्यते हि वेदगृह्यसूत्रादिष्वपि परिशिष्टभागः ॥

श्रीभास्करोपि—'मयाय बीजोपनये यदन्ते सूर्योक्तमाद्यं परमं रहस्यम्' इत्यनेन बीजस्य सूर्योपज्ञतां स्पष्टं कथयति स्वीये बीजोपनये ग्रन्थे। वैखानसश्रीनिवासयज्वापि तादृशग्रन्थस्य भास्करप्रणीततामेव व्याचष्टे—

'बीजोपनयभाष्ये च भास्करेण विपश्चिता'

'बीजोपनयभाष्यान्ते भास्कराद्यैः प्रपञ्चिताः'

'तत्कालबीजोपनयो भास्करेण विपश्चिता'

इति वाक्यैः। किञ्च वैखानस श्रीनिवाससूरिकृततिथिनिर्णयकारिकायां 'बाणवृद्धिरसक्षयौ'—इति वचने परमं प्रामाण्यमादधानास्ते महाभागाः कथं वा नाद्रियन्ते तादृश श्रीनिवाससूरिणैवोदितां बीजोपनयस्य भास्क-

रोपज्ञतामिति न वयं विद्मः । अतो न निरमायि भास्करेण बीजोपनय इति बीजविरोधिनामुक्तिः किञ्चिदपि न श्रद्धेया ॥

दृग्गणितं नाम दृक्समं प्रत्यक्षाविसंवादि गणितं तद्ग्रहोः कालात्समापतितम् । तदेव रविवसिष्ठसोमवराहमिहिरब्रह्मगुप्तभास्करादिभिः संस्कृतं ग्रहगणितम् । तैरेव स्वग्रन्थेषु—

१. 'तत्तद्गतिवशान्नित्यं यथादृक्तुल्यतां ग्रहाः'

२. 'दृक्तुल्यतां तु याताः कथमिह खचरा भवन्ति संस्पष्टाः'

३. 'उन्मीलनादतीताद्वा दृक्सिद्धं गणितागतात्'

४. 'सिद्धान्तभेदेऽप्ययननिवृत्तौ सममण्डललेखासंप्रयोगाभ्युदितांशकानां छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादन कुशलः'

५. 'तस्माद्दृक्तुल्यकरं वक्ष्ये मध्यस्फुटीकरणम्'

६. 'स्फुटक्रियादृग्गणितैक्यकृद्या'

इति दृक्सिद्धग्रहानयनस्य सादरमादृतत्वात् । एतेन पाश्चात्यगणितमेव दृग्गणितं नान्यदित्युक्तिरपास्ता । अत्रैवं केचित्प्रत्यवतिष्ठन्ते—

१. 'प्रत्यहं तिथिनक्षत्रयोगस्यानयने विधु ।
अबीजसंस्कृतो ग्राह्यो ग्रहणादौ सबीजकः' ॥

२. 'यन्त्रवेधादिनाज्ञातं यद्बीजं गणकैस्ततः ।
ग्रहणादि परीक्षेत न तिथ्यादि कदाचदन' ॥

३. 'शृङ्गोन्नतौ ग्रहयुतौ ग्रहणे तथास्ते
छायानिरीक्षणविधावुदये प्रदेयम् ।
बीजं फलं तिथिभयोगविधौ त्वदेयं
चन्द्रे प्रदेयमखिलं क्षितिजादिकेषु ॥

एवमादिभिर्वचनै रवीन्द्वोर्नेदं बीजम् । तत् संस्कृतार्केन्दुभ्यामानीता-तिथिः '—

' अदृष्टफलसिध्यर्थं यथार्काद्गणितं कुरु ।
गणितं यदि दृष्टार्थं तद्दृष्ट्युद्भवतः सदा ' ॥

इति कमलाकरवचनाददृष्टफलकपैतृककर्मादिषु न ग्राह्या किन्तु दृष्टफल-कोपरागादिष्वेव ग्राह्या । अपि च शिरोमणौ स्पष्टाधिकारे ॥

१. ' यात्राविवाहोत्सवजातकादौ
खेटैः स्फुटैरेव फलस्फुटत्वम् ।
स्यात् प्रोच्यते तेन नभश्चराणां
स्फुटक्रिया दृग्गणितैक्यकृद्या ' ॥

२. ' स्थूलं कृतं भानयनं यदेत
ज्ज्योतिर्विदां संव्यवहारहेतोः ।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतं
विवाहयात्रादिफलप्रसिद्ध्यै ' ॥

इति श्रीभास्करार्यैर्विवाहादिषु दृग्गणिताऽवश्यकताया नक्षत्रानयने स्थूल-सूक्ष्मसाधनद्वैविध्यस्य च प्रतिपादिततया दृक्समासमखचराः क्रमा-द्दृष्टादृष्टफलककर्मसूपयुज्यन्त इत्यर्थः प्रतीयते । युगान्तरोद्भवानां महा-भागानां निरवद्यादृष्टिश्शास्त्रतत्वयाथात्म्यग्राहिकाऽऽसीत् । आधुनिकानां तु पापभूयिष्ठा दृष्टिः सुयन्त्रसहस्रपुरस्कृतापि यथावस्थितार्थबोधनक्षमा न भवितुमर्हति ॥

अतः—

' तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः ।
प्रयान्ति तत् प्रवक्ष्यामि स्फुटीकरणमादरात् ' ॥

इति । सूर्यसिद्धान्तपद्ये दृक्छब्दस्य शास्त्रीयदृष्टिपरतया विवक्षितत्वात्

प्रवक्ष्यामीत्युत्तमपुरुषप्रयोगेण निर्दोषया शास्त्रदृष्टयैव ग्रहावस्थानं यथावन्निश्चित्य ब्रवीमि ततो न शङ्कावकाशः कार्य इत्यर्थस्य भगवदभिप्रेततया—

'सूर्यसिद्धान्तशास्त्रेण समानीता ग्रहाः सदा ।
नित्ये कर्मण्युपादेया न तु दृग्गणितागताः' ॥

इति वचनप्रामाण्याच्च सूर्यसिद्धान्तीयं तिथ्याद्यानयनमेव नित्यकर्मसु ग्राह्यम् ॥

रव्युदितदेशान्तरमन्दफलभुजान्तरसंस्कृतरवीन्दुसंसाधिता पञ्चषष्टिघटिकोपचिता चतुष्पञ्चाशन्नाडिकापचिता चाप्रत्यक्षा तिथिरेव कर्मणि ग्राह्या न तु तदधिका तन्न्यूना च तिथिः । इति ॥

अत्रेदं विचार्यते । तिथिभयोगसाधने ग्रहणोदयास्तादौ चार्कशशिनोः क्रमान्निषिध्यमानं विधीयमानं च क्षितिजादीनां सर्वदाविरच्यमानं च बीजं किंरूपमिति विवेचनीयम् । बीजं नाम दृग्गणितैक्यसंपादकः संस्कारविशेषः । बीजंच त्रिविधं स्थिरं चरमायनं च । इति ॥

'राश्यादिरिन्दुरङ्कघ्नो भक्तो नक्षत्रकक्षया' ।
'खाभ्रखार्कैर्हृताः' . . . . ॥

इत्याद्यागमोक्तं बीजं स्थिरसंज्ञम् । तादृशबीजसंस्करणे कृतेऽपि न दृक्साम्यमिति स्वोपज्ञं प्रतिषाष्टिशरदं तात्कालिकसूक्ष्मवेधेनोपलभ्यमानं बीजं चरसंज्ञकम् । तदाहतुः श्रीभास्करार्यगणेशदैवज्ञौ—

'यद्यपि पूर्वमपीदं संक्षेपादुक्तमागमोक्तदिशा ।
नैतावतैव कश्चिद्दृक्करणैक्याय कल्पते गणकः ॥
दृक्करणैक्यविहीनाः खेटाः स्थूला न कर्मणामर्हाः ।
अत इह तदर्हतायै तात्कालिकबीजविस्तरं वक्ष्ये ॥'

'श्रीकेशवः स्फुटतरं कृतवान् हि सौरा-
र्यासन्नमेतदपि षष्टिमिते गतेऽब्दे ।
दृष्ट्वा श्लथं किमपि तत्तनयो गणेशः'

इति ।

'स्फुटं दृक् तुल्यतां गच्छेदयने विषुवद्द्वये ।
प्राक् चक्रं चलितं हीने छायार्कात् करणागते ॥
अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाऽधिके ।'

इति सूर्यसिद्धान्तोक्तप्रक्रियया छायार्ककरणार्कयोरन्तरमयनचलनांशाः । तदेवायनबीजम् । सूर्यसिद्धान्ते—

'तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः ।
प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात् ॥'

इति पद्ये ग्रहाः सूर्यादयो येन प्रकारेण दृक्तुल्यतां वेधितग्रहसमतां गच्छन्ति तत्तु स्फुटीकरणं सूक्ष्मत्वेन कथयामीत्युपक्रम्य मध्ये यथाक्रमं स्फुटीकरणोपकरणानि ज्यार्धविषमसमपदान्तीयेष्टमन्दशीघ्रपरिधिमन्दशीघ्रफलतद्गतिफलादीनि प्रदर्श्य तै रव्यादीनां स्पष्टीकरणं तनान्तिथ्यानयनं चाभिधाय—

'एषा स्फुटगतिः प्रोक्ता सूर्यादीनां खचारिणाम् ।

इत्युपसंहरणात् तिथ्यादिसाधने भगवता न बीजं निषिद्धम् । किन्तु तत्र दृग्गणितमेवाऽवश्यकमिति समर्थितम् अपि च—

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेत् (तै. सं. का. २ प्र. ५ अ. ५) इत्यभ्युदयेष्टिप्रकरणस्थश्रुत्या-चतुर्दशीममावास्येति मत्वा सङ्कल्प्य रात्रौ हविर्निर्वपणानन्तरं प्रातश्चन्द्रदर्शने हविर्विनियोगं विधायेष्टेः पुनः करणं विधीयते तस्मात् निर्वापयोगयोर्मध्ये यथा चन्द्रमसः पुरस्तादभ्युदनयो न भवति तथा

कालो ग्राह्यः । अत्र भट्टभास्करीयं भाष्यम्—'अत्र ब्रूमः अस्य चन्द्रमसो द्वादश दृश्यादृश्यकला अंशा' इत्युपक्रम्य 'तस्मात् तादृशः सूक्ष्मगणनाकौशलशालिना कालोऽन्वेष्यः' इति ॥

सूक्ष्मगणना तु दृग्गणितमेव । तदेकगम्यो हि दृक् समश्चन्द्रोदयकालः । स चोदयस्तिथ्यधीनः । तन्यते विस्तार्यते चन्द्रकलाऽनयेति हि तिथेर्निर्वचनम्—

'तन्यन्ते कलया यस्मात् तस्मात्तास्तिथयः स्मृताः ।
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ॥
तिथयस्ताः समाख्याताष्षोडशैव वरानने ।

तनोति विस्तारयति वर्धमानां क्षीयमाणां वा चन्द्रकलां यः कालविशेषः स तिथिशब्देनोच्यत इत्यत्रापि भूगर्भान्नीयमानमर्कं प्रति यत् सूत्रं यच्च भूगर्भाच्चन्द्रं प्रति नीयमानं तत् सूत्रयोरन्तरं यदा द्वादशभागामितं तदैकैका तिथिरिति' एवमादिभिः प्रमाणैस्तिथिः प्रत्यक्षैव । सा त्वप्रत्यक्षेत्युक्तिर्भ्रान्तिमूलिका । तिथिचन्द्रोदययोः परस्परसंश्लेषः प्रत्यक्षसिद्धः । सूक्ष्मगणितावगतचन्द्रोदयकालात् प्रागेव केवलमदृष्टफलकयोर्निर्वापयागयोरनुष्ठेयतया विधानाददृष्टफलककर्मणि दृग्गणितमनर्हमिति वचनं दूरतोपास्तम् । वेदैकशरणानां प्राधान्येन सर्वाण्यपि कर्माण्यदृष्टफलकानि । यद्यपि विवाहोत्सवादीनां वनितोपभोगापत्योत्पादननयनानन्दादिदृष्टफलकत्वेप्यपवर्गरूपादृष्टमुख्यफलकत्वमेव विधिचोदितम् । विधिरयं समानः पैतृककर्मणोपि । संकीर्त्यते च जातकज्ञैः पूर्वजन्मोपार्जितपितृशापमूलकसन्ततिदोषनिबर्हणद्वारा सन्ततिलाभाधायकत्वाद्दृष्टप्रयोजनवत्त्वमदृष्टप्रयोजनस्यापि पितृकर्मणः । यदाह मन्त्रेश्वरः—

'दानं श्राद्धं कर्म नागप्रतिष्ठां ।
कुर्यादेतैः प्राप्नुयात् संततिं सः' ॥

इति । अतो दृष्टादृष्टफलककर्म भेदेन सूक्ष्मस्थूलगणितव्यवस्थापनमनुपपन्नम् ॥

यथा भौमादीनां मन्दफलमर्धपूर्णसंस्करणभेदेन द्विवारमुपात्तं न तथा रवीन्द्वोः । किन्तु तयोर्मान्दं फलमेकवारं समग्रं संस्कार्यमिति द्योतनाय 'मान्दं कर्मैकमर्केन्द्वोः' इत्यत्रैकपदं निविष्टम् । न तु तेन मन्दफलातिरिक्ततात्कालिकसंस्कारान्तरव्युदासः कृतः ।

"यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् । दृश्यते तेन पक्षेण कुर्यात्तिथ्यादि निर्णयम्'

'संसाध्य स्पष्टतरं बीजं नलकादियन्त्रेभ्यः ।
तत्संस्कृतास्तु सर्वे पक्षास्साम्यं भजन्त्येव' ॥

'ध्यानग्रहोपदेशाद्बीजं ज्ञात्वा च दैवज्ञैः ।
तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशौ' ॥

'दृक्करणैक्यविहीनाः खटाः स्थूला न कर्मणाम र्हाः' ।

इत्यादिभिः परस्सहस्रैर्वचनैर्दृक्सिद्धतिथिनैवाऽविशेषात् सर्वं कर्मानुष्ठेयमिति विहिततया श्रीभास्करार्यानूदिते सांहितिकोक्त सूक्ष्मनक्षत्रानयने नियमेन घटिकायामतिक्षयाऽतिवृद्धिसम्भवात तद्विवाहयात्रादिफलसंसिद्धावेव ग्राह्यं न तु व्रतश्राद्धादिक इति तिथिनिर्णयकारिकायां वैखानस श्रीनिवाससूरिणा स्पष्टमाभिहिततया च सूक्ष्मनक्षत्रानयनं दृष्टादृष्टफलकर्मसु दृक्समाऽसमग्रहग्राह्यतानिरूपणपरं न भवितुमर्हति । तथाच तद्वाक्यम्—

'तस्मात् केवलदृक्सिद्धेनैव श्राद्धादिकं चरेत् ।
एवमध्यर्धभोगादि नक्षत्रादि महर्षिभिः' ॥

'सूक्ष्मतारादिके यस्माादतिवृद्धिरतिक्षयः ।
ततस्तानि फलायैव न व्रतायेति निश्चितम्' ॥

इति 'भूमेर्मध्ये खलु भवलयस्यापि मध्यं यतः स्यात्'। 'त्रिभज्यकासंमितकर्कटेन कक्षाख्यवृत्तं प्रथमं विलिख्य' इत्यादिना भास्करार्यैः भगोलभूगोलयोरैककेन्द्र्याभ्युपगमेन भमध्यभूमध्ययोरभेदस्य विस्पष्टमुपपादिततया तैरेव बीजोपनये—

'अतः कुमध्याद्गतखार्धसूत्रे
दृक्तुल्यतामिति नभश्चरो यः
स एव शुद्धः परमार्थतः स्यात्

इत्यनेन भूगर्भभूपृष्ठाभ्यां निस्सृतयोर्दृक्सूत्रयोः खार्धसाम्यावश्यं भावेन-भूगर्भखार्धदृक्सिद्धयोर्ग्रहयोरैकरूप्यस्य वर्णिततया च कर्मसु भूगर्भदृक्सिद्धिरेवाऽवश्यकी। न तु लम्बनावनतिसंस्कारजभूपृष्ठदृक्सिद्धिः। तात्कालिकचरबीजसंस्कृत एव खलु ग्रहो निर्दिष्टकाले खार्धे दृक्सिद्धो भवति' यदाऽह श्रीमान् श्रीनिवासयज्वा।

"भचक्रनाभिदृक्सिद्धे कुर्याच्छ्राद्धव्रतादिकम्।

इति। तस्मात्"—

'राहुदर्शनतोऽन्यत्रदृक्सिद्धानेष्यतेतिथिः'

इत्यादौ भूपृष्ठदृक्सिद्धतिथिरेवनिषिध्यतेनान्या।

धीवृद्धिदतन्त्रे मध्याऽधिकारे मध्यग्रहे—

'शाकेनखाब्धिरहितेशशिनोक्षदस्रैः'—इत्यादिना बीजसंस्करणं मुक्तकण्ठं ब्रुवाणः श्रीलल्लाचार्योभूयः —'शृङ्गोन्नतौग्रहयुतौ'—इत्यादिना तिथिभयोगविधौ चन्द्रे, न बीजं देयमिति प्रतिषेधतीदमुपहास्यम्। कथं वा ब्रह्मगुप्तश्रीपतिभास्करादिभिरादा वेव बीजसंस्करणं कथितम्॥

अतोऽवगम्यते—रव्यादिषु स्थिरचरबीजसंस्करणं तिथ्यादिसाधनेत्वायन बीजाऽसंस्कृतिश्चेति॥

अत्रेदमाकूतम्। सायनाभ्यां निरयणाभ्यां वाऽर्केन्दुभ्यां साधिता

तिथिरविकृतैव भवति। क्षेप्यशोध्याङ्कयोरैक्यात्। सायनार्कनिरयणेन्दुभ्यां निरयणेन्दुसायनार्काभ्यां वा साधिता तिथिस्तु विकृतैवभवति। सायनशशिना नक्षत्रानयने सायनाभ्यां ताभ्यां योगसाधने च महदन्तरं स्यादेव। तिथिसाधने त्वायनबीजप्रतिषेध इत्यस्य सायनमास तिथिर्नगृहीतव्येत्यर्थोवर्ण्यः — तस्मात् तिथ्यादिसाधने बीजनिषेधकानि सर्वाणि वचनानि नूनमायनबीजप्रतिषेधकानि न तु तात्कालिकबीजनिषेधकानि। अनयैव व्यवस्थया बीजविधायकानां बीजनिषेधकानां च सर्वेषां वचनानामैककण्ठ्यं भवति। तदुक्तं तिथिनिर्णयकारिकायाम्।

'तस्मात् सायनमासे तु तिथिः श्राद्धं न चार्हति
छायार्कजनितो मासो दृक्सिद्धो न हि वास्तवः।
तस्मान्निरयणे मासि तिथिर्ग्राह्या न चान्यथा॥

इति। सायनमासतिथिप्रतिषेधोऽयं सायनविधुसाधितभस्य सायनरविचन्द्रानीतयोगस्य चोपलक्षकः। अतस्तिथ्यादिसाधने बीजसामान्यनिषेधोक्तिर्न न्याय्या॥

सुकृतिदुष्कृतिनिर्विशेषमेव यथावस्थितग्रहगोलावस्थानबोधस्य सुशकतया पूर्वजैर्धार्मिकैर्यथा दृश्यते खचरावस्थितिर्न तथा नव्यैः पापैर्लक्ष्यत इतीदं बालोऽपि न विश्वसिति॥

श्रीभास्करीयग्रहगणितमध्यमाधिकारे —' यतः सृष्टिरेषां दिनादौ दिनान्त'—इति पद्यव्याख्यायां मरीचौ श्रीरङ्गनाथदैवज्ञसुतः श्रीमुनीश्वराचार्यः 'चारप्रवृत्तौ खेटानां तथा धर्मस्य निर्णये। श्वेतवाराहकल्पे तु मतं पाराशरं विदुः'—इति गर्गोक्त्या परमाप्ततमेन भगवता पराशरेण-

'सुप्तोत्थितो हि भगवान् कल्पादौ ससृजे ग्रहान्।
तदैव योजयामास प्रवहाख्ये नभस्वति॥

इति कल्पादावेव ग्रहाणां सर्जनं गतिप्रारम्भणं चाभ्यधायि । सूर्यसिद्धान्ते तु—

'ग्रहर्क्षदेवदैत्यादि सृजतोऽस्य चराचरम् ।
कृताद्रिवेदा दिव्याब्दाः शतघ्ना वेधसो गताः'

इति कल्पे शतगुणितकृताद्रिवेद ४७४०० मितदिव्याब्देषु (सौरेषु १७०६४०००) व्यतीतेषु द्युसदां सृष्टिर्गतिप्रारम्भश्चाभाणीति द्वयोरागमयोर्मिथोर्विरोधात् पाराशरतन्त्रस्यैतत्कल्पसिद्धत्वं सूर्यसिद्धान्तस्य कल्पान्तरसिद्धत्वं च समर्थयन् अनयोरागमयोर्विरुद्धयोः कथं प्रामाण्यमङ्गीकार्यमिति शङ्कमानः ॥

'किं तेनापि सुवर्णेन कर्णाघातं करोति यत् ।
तथा किं तेन शास्त्रेण यन्न प्रत्यक्षतः स्फुटम्' ॥

इत्यभियुक्तोक्तिमपि प्रमाणयन् 'यस्मिन् काले यत्पक्षानीतो ग्रह आकाशे दृग्योग्यस्तस्मिन् काले तत्प्रत्यक्षस्य तद्विषये प्रामाण्यप्रतिपादनादत एवैतत्कल्पसिद्धपक्षेण कालभेदोऽत्रकेवलमित्युक्तत्वाद्यदा ग्रह आकाशे न संवदति तदैतत्पक्षस्याप्यप्रामाण्यं बीजदानेन तदापि तस्य प्रामाण्यमिति सर्वाभ्युपगमः तथा च दृग्गणितैक्येन बीजदानेन च प्रामाण्ये सिद्धे कल्पान्तरसिद्धपक्षस्यैतत्कल्पसिद्धपक्षेणाऽविशेषत्वप्रतिपादनात् प्रवृत्तिरुभयत्र तुल्येति न क्षतिः' इति व्याचष्टे । अतः सूर्यसिद्धान्तेनैव तिथ्यादिकं साधनीयमिति मतमभिनिवेशमूलकम् । साम्प्रतिकोपलब्ध्यनुगुणः सिद्धान्त एव ग्राह्य इतीदं निर्विवादम् ॥

यच्चूक्तं बाणवृद्धा रसक्षीणा च तिथिर्ग्राह्या नान्येति । तदपि नोपपद्यते, तिथिनिर्णयकारिकावचनद्वयार्थपर्यालोचनया, तथाहि—

'रवीन्दुमन्दसंसिद्धात् तत्तत्तिथ्यादिभोगतः ।
स्यातां तत्कालबीजोत्थौ बाणवृद्धिरसक्षयौ ॥

अतः पैतृककर्मादौ तत्कालचरबीजकैः ।
बाणवृद्धा रसक्षीणा ग्राह्या नान्या तिथिः क्वचित् ' ॥

अनयोः पद्ययोरर्थः—

रवीन्दुमन्दसंसिद्धात्—रवीन्द्वोर्यन्मन्दं फलं तेन संसिद्धात् तत्तिथ्यादिभोगतः तत्तत्तिथ्यादेः परमोपचितः परमापचितश्च यो भोगः तस्मात् सूर्योक्तकेवलमन्दफलसंस्कृतार्केन्दुसाधितस्य तत्तत्तिथ्यादेः परमाभिवृद्धपरमापचितघटिकामानापेक्षया तत्कालबीजोत्थौ ग्रन्थकर्तृकालिकचरबीजसंस्करणभवौ बाणवृद्धिरसक्षयौ—पञ्चघटिकाभिवृद्धिषड्घटिकाह्रासौ भवतः । अतः पैतृककर्मादौ तत्कालचरबीजैः बाणवृद्धा रसक्षीणा च केवलमन्दफलसंस्कृततरणिशशिसंभूतपरमेधितपरमापचितघटिकामानात् पञ्चघट्युपचिता षट्घटिकापचिता च तिथिर्ग्राह्या नान्या केवलमन्दफलसंस्कारजपरमोपचयपमापचयसहिता तिथिर्न गृहीतव्या इति ॥

तस्मादाकल्पं पञ्चषष्टिचतुष्पञ्चाशद्घटिकापरिमितैव तिथिरङ्गीकार्येति वचनमनुपपन्नम् ॥

संप्रति ज्योतिर्गणितरीत्या—

तिथेरवधिः ५० घटीभ्यः ६७ घटीपर्यन्तं
नक्षत्रावधिः ५२ घटिकाभ्यः ६८ घटिकाः यावत्
योगावधिः ४७ नाडिकाभ्यः ६३ नाडिकावधिकं च वर्तते॥

' बाणवृद्धिरसक्षया ,—विति वचनानुरोधेनाकल्पं पञ्चषष्टिचतुष्पञ्चाशद्घटीप्रमितैव तिथिर्ग्राह्या यदि तर्हि—

' वृद्धिक्षयौ स्तः परमा तिथौसदा ,—
व्यर्धा रसाः साग्निरसाश्च नाडिकाः ।
षट्षष्टिदण्डाऽभ्यधिका तिथिर्या ।

तच्च त्रिमुहूर्तवृद्धौ संपद्यते' ।

इति ज्योतिर्विदाभरणासिद्धान्तदर्पण वैद्यनाथीय वचनान्यन्यानि च व्याकुप्येयुः ॥

किञ्च 'तादर्थ्येन प्रवृत्तं शास्त्रं बलीयः' इति न्यायेन प्रत्यक्षभूतस्य ज्योतिश्शास्त्रस्य तादात्विकवेधोपलब्ध बीजसंस्कृतदृक्सिद्धगणितानीततिथिघटिकेयत्ता निर्णायकत्वेन बलीयस्त्वान्नात्र धर्मशास्त्रस्य व्यवस्थापकत्वमिति जानन्त्येव सहृदयाः । विषयेऽत्र बहु वक्तव्यं समयान्तरे सविस्तरमुपपादयिष्यामः । निरयणे याम्यसौम्ये विषुवेऽयने चैव ग्राह्ये न तु सायन इति केचिद्विवदन्ते । तत्रेदं संक्षिप्य कथ्यते । खनेत्राब्धि ४२० मिते शकेऽयनांशाभाव आसीत् । तदात्वे सायनयोर्निरयणयोश्च याम्योत्तरयोर्विषुवयोरयनयोश्चाभेदात् तादृश विषुवायनव्यवहार एव नाजनि । संप्रति महत्तरस्य कालस्य व्यतीततया संवृत्तः सोयं व्यवहारो न्याय्यः ॥

'चक्रे चक्रार्धे च व्ययनांशेऽर्कस्य गोलसन्धिः स्यात् । एवं त्रिभे च नवमेऽयनसन्धिर्व्ययनभागेऽस्य'—इत्युक्त लक्षणलक्षिते विषुवे मेषादौ तुलादौ च क्रान्त्यभावेन समरात्रिन्दिवकालस्य अयनसन्धौ मृगादौ कर्क्यादौ च परमापक्रमेण क्रमेण पारम्येण दिनह्रासवृध्योश्च प्रत्यक्षोपलम्भात् सायनमानजे विषुवे दक्षिणोत्तरायणे च ग्राह्ये न तु निरयणमानजे—इतीदं गोलविदां स्फुटमेव ॥

तस्मात् श्रौते स्मार्ते च कर्मणि सबीजार्केन्दुसाधित भूगर्भदृक्सिद्धतिथिरेव ग्राह्या न तु भूपृष्ठदृक्सिद्धातीथिरिति दृग्गणितविदां राद्धान्तः ॥

एवं यावद्बुद्धिबलोदयं बहुग्रन्थ परिशीलनेन संक्षिप्य प्रदर्शितेऽत्र विषये प्रमादपतिता दोषाः सोढव्याः सहृदयैर्गुणकमणिभिर्दयालुभिरिति सप्रश्रयमभ्यर्थयामः ॥

---

# अदृष्टपरीक्षा.

## प्रस्तावना.

अभिवन्द्य महोदारामस्मद्गुरुपरम्पराम् ।
अदृष्टतत्त्वमीमांसां कामपि प्रारभामहे ॥

अदृष्टं नाम किञ्चिद्भूतं सकलमनुजहृदयकुहरे निवसति । तत्तत्त्वमादौ सकलैः मनुष्यैः बोद्धव्यम् । तदेतददृष्टं दैवं दिष्टं विधिः नियतिः कर्म पुण्यं पापमित्यादिभिश्शब्दैर्व्यपदिश्यते । तस्य सामर्थ्यं तत्प्रतिद्वन्द्विभूतस्य पौरुषापराभिधानस्य प्रयत्नस्य च सामर्थ्यं च अन्योन्यस्य सामरस्येन निर्वहणीयमित्यार्यसंप्रदायः । तस्यादृष्टाभिधानस्य कर्मणः तत्त्वं दुर्बोधमिति भगवान् वासुदेवोऽप्यगायत्—

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ (४-१७)

इति । अत्र विकर्मणः अकर्मणः इति पदयोः संदर्भानुसारेण विचित्रार्थभाषणेऽपि कर्मगतेः गहनरूपत्वे न कस्यापि विवादः ॥

## सामर्थ्यविकल्पः.

तत्र केचित्स्वभावाद्वा कालात्पुरुषकारतः ।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ (१-३५०)

इति याज्ञवल्क्यः स्मरति । तस्यैतस्य वचनस्य परीक्षायां चत्वारो विकल्पाः परिस्फुरन्ति । ततश्च चत्वारस्स्वतन्त्रा वादाः स्थिता इत्यवधार्यते । दैवस्वातन्त्र्यवादः स्वभावस्वातन्त्र्यवादः कालस्वातन्त्र्यवादः पुरुषकारस्वातन्त्र्यवादश्चेति । आचार्यसम्मतस्तु वादः सर्वसमु-

च्छयः पुरुषकारप्रधानः वादः । स एव उत्तरार्धेन विशदीकृतः ॥

ततश्चात्र बाधविकल्पसमुच्चयपक्षा इति त्रयः पक्षाः फलन्ति । यथा आश्रमचतुष्टये गृहस्थाश्रमः एक एवाश्रमः नेतरे इति पक्षः आचार्यजैमिनिसम्मत इति विश्रुतमेतत् । विकल्पपक्षस्तु बादरायण सम्मतः आपस्तम्बादिभिः प्रदर्शितः । समुच्चयपक्षस्तु मन्वादिसम्मत इति च सुप्रसिद्धम् ॥

यथा वा मोक्षं प्रति ज्ञानकर्मणोस्साधनत्वपरीक्षायामेते पूर्वोक्ताः पक्षाः त्रयः सन्ति । तत्र ज्ञानस्यैव मोक्षसाधनत्वमिति साङ्ख्योपज्ञमौपानिषदैस्समाश्रितः एकः बाधपक्षः । कर्मण एव मोक्षसाधनत्वमित्यपरः जरन्मीमांसकसम्मतः बाधपक्षः । विकल्पपक्षस्तु भागवतसिद्धान्तः । यथा (भगवद्गीता ५-४)—

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥
यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥

इति । अत्र साङ्ख्ययोगपदे ज्ञानकर्मपरे ॥

समुच्चयपक्षस्तु विचित्रः समसमुच्चयपक्षः विषमसमुच्चयपक्षश्चेति । आद्यं पक्षमौपवर्षाः यादवप्रकाशादयश्च प्रपेदिरे । अन्त्योऽपि ज्ञानानुषक्तकर्मपक्षः कर्मानुषक्तज्ञानपक्षश्चेति द्विविधः । प्रथमः कुमारिलसम्मतः । द्वितीये कर्माङ्गकज्ञानपक्षेऽपि आरादुपकारकत्वरूपादृष्टद्वारकत्वलक्षणाङ्गतावादः भास्करसम्मतः । करणशरीरनिष्पादकत्वलक्षणसान्निपत्योपकारकतारूपाङ्गतावादः रामानुजसम्मतः । दूरादुपकारकत्वलक्षणारादुपकारकत्ववादः शङ्करसम्मतः । तथा—अदृष्टपरीक्षायामपि मतभेदास्सन्तीत्यत्र नाश्चर्यम् ॥

पौरुषप्रधानः समुच्चयपक्षः याज्ञवल्क्यसम्मत इत्यत्र उत्तरोयं श्लोकः—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं नसिद्ध्यति ॥ (१-३५१)

इति समुच्चयवादः । पौरुषप्राधान्याभिप्रायस्तु—

दैवे पुरुषकारे च कर्मसिद्धिः व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ॥ (१-३४९)

इति पद्येन विशदीकृतः । अत्रायमभिप्रायः—प्राणिनामभ्युदयविनिपातादीनां दैवायत्तत्वात् यदि दैवमस्ति तदा परराष्ट्रादिकं स्वयमेव वशीभविष्यति । अथ नास्ति कृतेऽपि पौरुषे न भविष्यति । नियमादर्शनात् । अतो व्यर्थ एवायं प्रयत्नप्रयास इत्यत आह—दैव इति ॥ कर्मसिद्धिः फलप्राप्तिरिष्टानिष्टादिलक्षणा । सा न केवलं दैवे व्यवस्थिता, अपि तु पुरुषकारेऽपि । लोके तथा दर्शनात् । चिकित्सादिशास्त्रवैयर्थ्यापाताच्च । अपि च पुरुषकाराभावे दैवमेव नास्तीत्याह—तत्र दैवमिति ॥ यतः पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते । अल्पपुरुषकारानन्तरं महाफलोदयात् अभिव्यक्तं पौरुषं पौर्वदैहिकम् । तस्मात्पुरुषकाराभावे न दैवमस्तीति पुरुषकारे यत्नो विधातव्य इति । तथा च पुरुषकार एव पूर्वापरभावेन सकलफलसाधन इति पुरुषकारप्राधान्यवादः ॥

एवं दैवतत्त्वे स्थितेऽपि आलस्यवादाः विचित्राः प्रवर्तन्ते । तत्रायमेकः—

दृष्टश्च साध्वीसुतयोः यमयोस्तुल्यजन्मनोः ।
विशेषो वीर्यविज्ञानसौभाग्यारोग्यसम्पदाम् ॥ इति ॥

अतः प्रयत्नवाद एव बहुसम्मतः ॥

### न्यायाचार्यसम्मतिः.

तत्र न्यायाचार्याणामुदयनादीनामभिप्रायं विशदयामः—इह हि कार्यमात्रे पुण्यपापलक्षणमदृष्टं दैवरूपं कर्म कारणमिति चार्वाकेतरसकल-

सिद्धान्तसमंतोऽयं पन्थाः । तदेतददृष्टं सकलामपि बुद्धिप्रयत्नादिघटितां दृष्टसामग्रीं संपाद्य कार्यं करोतीति कर्मप्राधान्यवादिनः प्राहुः। निरूपकास्त्वितरे एवमाहुः—दृष्टसामग्रीवैकल्ये अदृष्टं दूरे तिष्ठति प्रतीक्षते च समयम् । इतरथा चित्राधिकरणसिद्धान्तविरोधः । तत्र हि चित्रापूर्वं दृष्टसामग्र्यां प्रतिबन्धकाभावादिघटितायां सत्यामिहैव जन्मनि फलं प्रयच्छति, असत्यां तु जन्मान्तरे इति निर्णीतम् ॥

यद्यदृष्टमेव दृष्टोपसंहारकरं स्यात् तदा कर्मप्रवाहपतितोऽयं मनुष्यः जलवाय्वादिनीयमान इव सर्वात्मना परतन्त्र एव स्यात् । ततश्च स्वभाववाद इव अदृष्टवादेपि—

आलस्यं प्रथमो दोषः प्रवृत्तिविरहस्ततः ।
निरर्थं सर्वशास्त्रं स्यात् देशकालाव्यवस्थितिः ॥

इत्यादयः दोषाः प्रादुःष्युः । ततश्च लोकयात्राविरोधः स्पष्ट एव ॥

तदेतत्सर्वमभिप्रेत्य न्यायकुसुमाञ्जलिः एवं प्रवृत्तः—"करतलानलसंयोगाद्यादृशादेव दाहो दृष्टः तादृशादेव मन्त्रादिप्रतिबन्धे सति दाहो न जायते । असति तु जायते । तत्र न दृष्टवैगुण्यमुपलभामहे । नापि दृष्टसाद्गुण्ये अदृष्टवैगुण्यं सम्भावनीयम् । तस्य दृष्टसाद्गुण्यमात्रार्थत्वात्, अन्यथा कदाचित् कर्मण्यपि विभागः न जायेत" इति ॥(१ स्त)

अयंभावः—अदृष्टविलम्बात्कार्यविलम्बः न क्वापि दृष्टः । अतः अदृष्ट दृष्टसामग्रीसाद्गुण्यसम्पादकं, न तु सामग्रीघटकम् । अन्यथा क्रिया क्रियातो विभागः विभागात्पूर्वदेशसंयोगनाशः तत उत्तरदेशसंयोगोत्पत्तिरिति क्रमे कदाचित् कर्माणि जातेऽप्यदृष्टविलम्बात् विभागविलम्बः स्यादिति ॥

तत्रैवान्यत्र—"इदानीं तु बीजादिसन्निविष्टानां पाकजादिविशेषाणामस्मदादिभिरुपसम्पादनम् । सृष्टिकाले तु विभक्तानामदृष्टादेव केव-

लात् मिथस्संसर्ग इति विशेषः । न च वाच्यमिदानीमपि तथैव किं न स्यात् । यतः कृष्यादिकर्मोच्छेदे तत्साध्यानां भोगानामुच्छेदप्रसङ्गात् । कार्यकारणभावव्यभिचारेणाव्यवस्थापत्तिश्च । अदृष्टानि कर्माणि दृष्ट कर्मव्यवस्थयैव भोगसाधनानीत्युन्नीयते । तस्मात्पाकजविशेषैः संस्थान-विशेषैश्च विशिष्टाः परमाणवः कार्यविशेषानारभन्ते" इति ॥

अनेनापि संदर्भेण दृष्टव्यवस्थानतिक्रमेणैव अदृष्टं कार्यकारि, न हि स्वरूपेण साक्षात्कार्यं करोति । नापि निरङ्कुशं स्वतन्त्रमिति च सिद्धं भवति । उक्तं च बाद्धैरपि बोधिचर्यावतारे (४६८)

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ इति ॥

## वेदान्ताचार्यसम्मतिः.

तात्पर्यचन्द्रिकायां (३–८) एवमनुश्रूयते—'अस्तु शरीरधारणमपेक्षितम्, तन्न स्वेच्छया चिरकालं कर्तुं शक्यम् । नाप्यौदासीन्यमात्रात्तन्निवृत्तिः, आरम्भककर्मशेषेण नियतावधिकत्वात् । स्मरन्ति च कर्मकाः 'प्रतिनियतानि विवाहो जन्ममरणमित्यादीनि' इति । एवं सति कथमुच्यते—'शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः' इति । अत्रायमभिप्रायः—द्विविधानि कर्मफलानि नियतान्यनियतानि चेति । प्रबलशापादिसम्भवानि नियतानि । इतराण्यनियतानि । अनियतत्वं च तेषां देशकालाद्यपेक्षया, न तु स्वरूपतः । येन कर्मणां निष्फलत्व-प्रसङ्गस्स्यात् । ततश्च यान्यधिकृत्य प्रायश्चित्तमन्त्रौषधनीतिशास्त्रादीनि । अन्यथा विजिगीषुभिरुपपन्नपरिपन्थिभिरपि न चतुरङ्गादिकमङ्गीक्रियेत । आतुरैरपि न भेषजमुपभुज्येत । स्वेच्छया किञ्चित्करणाभावे स्वारसिक-कर्तृत्वाभावात् शास्त्राणामप्यनुदय इति। शास्त्राणि तु आयुष्कामेष्टि-

विधायकशास्त्राणि, 'न पुराऽऽयुषः प्रमीयेत' इति निषेधशा स्त्राणि च ॥

इतस्य तु यथाशास्त्रं चिरं जीवितुमिच्छतः ।
प्राणरक्षणशास्त्रार्थलङ्घनं त्वपराधनम् ॥

इयादीनि वचनान्यपि (चरमश्लोकाधिकारे ६३८) अवगन्तव्यानि ॥

पुराणसम्मतिः.

श्रुतप्रकाशिकायां पुराणप्रकरणे—

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्धया संयोजयन्ति तम् ॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपनीतो विनश्यति ॥
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः ।
दृढप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥
पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः ।
नष्टप्रज्ञः पापमेव पुनरारभते नरः ॥

वासुदेवोऽप्याह (गीता)—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।

इति ।

मोक्षधर्मे चतुर्मुखस्य भगवदंशत्वं वक्तुमेवमुक्तम् (३५९ अ.)—

नारायणो महायोगी शुभाशुभविवर्जितः ।
ससर्ज नाभिजं पुत्रं ब्रह्माणममितप्रभम् ॥
ततस्स प्रादुरभवत् अथैनं वाक्यमब्रवीत् ।
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ॥

सृज प्रजास्त्वं विविधाः ब्रह्मन् सजडपण्डिताः ।
स एवमुक्तो विमुखः चिन्ताव्याकुलमानसः ॥
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् ।
का शक्तिः मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते ॥
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ।
स एवमुक्तो भगवान् बभूवान्तर्हितस्ततः ॥
चिन्तयामास विश्वेशः बुद्धिं बुद्धिमतां वर ।
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् ॥
योगेन चैनां संयोज्य स स्वयं युयुजे तदा ।
स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम् ॥
उवाच वचनं देवः बुद्धिं वै प्रभुरव्ययः ।
ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ॥
तदर्थमीश्वराविष्टा बुद्धिः क्षिप्रं विवेश सा ।
ततस्तं बुद्धिसंयुक्तं पुनस्तं ददृश हरिः ॥
भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः ।
बाढमित्येव जग्राह यथाऽऽज्ञां शिरसा हरेः ॥
तथाऽकरोच्च धर्मात्मा ब्रह्मा लोकपितामहः ॥

इति । अत्र भगवदनुप्रविष्टया बुध्या तदाहितशक्त्याऽनुप्रविष्टत्वात् सृष्टिसामर्थ्यं ब्रह्मण उक्तम् । अतः चतुर्मुखस्य भगवदवतारत्वमनुप्रवेशकृतमिति ॥

अनेनोपाख्यानेन बुद्धिपूर्विकैव सर्वा प्रवृत्तिः न तु वायूदकादिप्रेरणवदिति सुव्यक्तम् । अपि चानेन वेदापहारतत्प्रदानादिवृत्तान्तोऽपि व्याख्यातो भवति ॥

### अनुष्ठानसम्मतिः.

अवतारदशायामपि भगवान् लोकव्यवस्थां दृष्टां अदृष्टशक्त्या न व्याकुलयतीति स्पष्टमुच्यते ॥ (श्रुतप्रकाशिका. पुराणम् १३१ पु)–

मनसैव जगत्सृष्टिं संहारं च करोति यः ।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥
तथाऽपि यो मनुष्याणां धर्मस्तदनुवर्तनम् ।
कुर्वन् बलवता संधिं हीनैर्युद्धं करोत्यसौ ॥
साम चापि प्रदानं च तथा भेदप्रदर्शनम् ।
करोति दण्डपातं च क्वचिदेव पलायनम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते ।
लीला जगत्पतेस्तस्य छन्दतस्संप्रवर्तते ॥
ईशन्नपि महायोगी कीनाश इव दुर्बलः ।
कर्माण्यारभते कर्तुं सर्वस्य जगतः प्रभुः ॥
तेन वञ्चयते लोकान् मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते ते न मुह्यन्ति मानवाः ॥

इति । एतदभिप्रेत्यैव श्रीवत्साङ्कमिश्रेणैवमुक्तं पञ्चस्तव्याम्—

रूपप्रकारपरिणामकृतव्यवस्थं
विश्वं विपर्यसितुमन्यदसच्च कर्तुम् ।
क्षाम्यन् स्वभावनियमं ह्यनुवर्तसे त्वं
स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ॥

इति । ईश्वरोऽपि लोकव्यवस्थां न विपर्यस्यतीति । सिद्धान्तप्रबन्धेषु न क्वापि लोकोत्तराद्भुतशक्तिप्रदर्शनेन ईश्वरत्वं आचार्यत्वं सर्वज्ञत्वं सर्वशक्तत्वं वा व्यवस्थापितमस्ति । ततश्चाधुनातनानां बुद्धपरमहंसादीनामद्भुतचरित्रोदाहरणेन संघीकरणं व्याख्यातं भवितुमर्हति ॥

(अनुवर्तते)